५ ६ ९ १ १
बाणार्यङ्केन्दुमितसमसि प्रावृषं 'शेवलायां,'
स्थित्वोद्वाह्य प्रथममुपधानव्रतं श्रावकाणाम ।
'सूर्यद्रङ्गे' जलदसमयौ यापितौ धर्मकृत्यै-
२
र्दीक्षित्वैतर्हितनगणपं 'माणिकं' चान्यभव्यान् ॥ ४० ॥

धर्मक्रान्तिच्छलमुपदधन् लालनाख्यो हि विद्वन्-
३
मन्य'स्सिद्धाचल'भुवि तदाऽपूजयत्स्वं शिवाद्यैः ।
पाखण्डं तत् भृशमपगतं कर्त्तुकामैर्गणीन्द्रै-
४
र्मन्द्श्रीः कान्तिविजयमुखैस्सङ्घबाह्य कृतस्स ॥ ४१ ॥

५ ६
स्थित्वा वर्षं विषयजिनमौ 'स्तम्भतीर्थे' च'छाण्यां,'
ज्येष्ठभ्रात्रे 'विजयमणये' वर्यपन्न्यासभूषाम ।
दत्वा तीर्थानि सविधि नमन् 'पत्तनं चाणहिलं,'
भव्यश्रोतॄन् जिनमतसुधां पाययन्नाप रम्यम ॥ ४२ ॥

७
तत्रायाप्य श्रुतवरमुदाप्यायिनीं भव्यवर्या,
८ ९ १० ११
सङ्घस्थित्यां तपसि धवले दिक्तिथौ मल्लितीर्थे ।
१२
अज्ञानान्धंतमसमथनायागमोद्धारकर्त्रीं,
श्रीऽर्यां संस्थाप्य समितिमथो हर्षयामास भव्यान् ॥ ४३ ॥

आज्ञप्तं य'स्स्वगुरु'जयवीरा'भिधैरागमाना-
मुद्धारार्थं चरमसमये' पालितुं तद् यथेष्टम ।
वह्वायासेन च गणिवरस्साधुसङ्घोपकृत्यै,
प्रारेभे मुद्रणमथ महत् स्वाश्रयेणागमानाम ॥ ४४ ॥

---

१ वर्षे । २ वर्त्तमानकालीनगच्छाधिपतिमिति भाव । ३ शिवजीदेवशीप्रभृतिभि । ४ प्रवर्त्तककान्तिविजयमहाराजमुख्यै सूरिभिरित्यध्याहार्यम् । ५ चातुर्मासद्वयम् । ६ त्रयोविंशति-चतुर्विंशतितमस्त्यर्थ । ७ श्रुतज्ञानस्य वरमुद -हर्षस्याप्यायिनीं-पोषिकां । ८ चतुर्विधसघस्योपस्थितिसूचकमिद पदम् । ९ वैशाखमासे । १० दशम्याम् । ११ भोयणीतीर्थे । १२ आगमोदयसमितिसूचकोऽय शब्द ।

वर्षायां 'पाटण'मुपगतैर्वाचनाऽद्या ह्यकारि,
निर्ग्रन्थानां वरमतिमतामागमाभ्यासवृद्ध्यै ।
तस्यां श्री'सूयगडदशवैकालषट्त्रिंशिकादीं'न्,
व्याख्यायाऽयुः 'कपडवणजे' वाचनायै गणीशाः ॥ ४५ ॥

तत्र व्याख्याय पटु 'ललितावश्यकादीं'न्[1] सुयत्नं
जग्मुर्वर्षार्थे 'महमदपुर्यां'[2] स्वधर्माभिवृद्ध्यै ।
तत्र'स्थानाङ्ग'मथ सविशेषाकरं[3] वाचयित्वा,
वर्षामस्थात् 'सुरतनगरे' भासयन् जैनधर्मम् ॥ ४६ ॥

तत्राकार्षुर्युगशरमिते[4] वाचने 'चानुयोग-[5]
श्रीनन्द्याचारमुखमहदावश्यकाद्या'गमानाम् ।
एवंकारात् सुयतिसमजे[6] कालदोषात्प्रहीणं,
सच्छास्त्राणां विततपठनं संततं वृद्धिमाप ॥ ४७ ॥

'आनन्दाब्धेः' प्रवरगणिनस्तत्त्वनिष्णागरिष्ठौ,
भक्त्युत्साहौ श्रुतजिनमतस्फीतिकायेषु दृष्ट्वा ।
(४)(७)(९)(१)
वर्षेऽयात्त्रिग्रहतनुमते राधशुक्ले[7] दशम्या-
मा यत्वं 'कमलविजया'ख्यसूरयः 'सूरते'ऽदुः ॥ ४८ ॥

स्वर्णे माणिक्यमिव खचितं योग्यसाम्यं च सूरे-
र्वीक्ष्य प्रीतस्सुमहमकरोत्'सूर्यपुर्या'स्सुसङ्घः ।
न्यायागारे ललनविषयानिष्टवादं[8] विजित्य,
धर्मभ्राजी मुनिपतिरथो 'मोहमय्यां' समेतः ॥ ४९ ॥

---

१ ललितविस्तरा–आवश्यकसूत्र(१/४)–अनुयोगद्वारसूत्र–योगदृष्टिसमुच्चय–उत्तराध्ययनसूत्र(१/३)ग्रन्थानित्यर्थः । २ अमदावादनगरे । ३ विशेषावश्यकभाष्य(८/४)सहितमित्यर्थः । ४ चतुर्थो–पञ्चमो चेति भावः । ५ ललितविस्तरा–योगदृष्टि० अनुयोग०(१/२)–आवश्यक०(१/४)–उत्तराध्ययन०(१/३)–विशेषावश्यक०(८/४)–स्थानाग०(१/२)–सूत्राणामित्यर्थः । ६ साधुसङ्घे इति भावः । ७ वैशाखशुक्ले । ८ लालन–शिवजीप्रकरणे न्यायागारेऽपि विजित्येत्यर्थः ।

(२८)		[१]
लब्ध्यङ्कप्रावृषि वृषमहिम्नोऽङ्को नैककार्यैं-
दुर्भिक्षार्त्तीयनिधिकरणेऽप्रेरयद् दानशौण्डान् ।
'कीकाभ्रातु'र्भवनमुषितस्सूरिराड् 'भायखल्ले,'
स्वाग क्षान्त्यै विहितविनय प्रार्थितो लालनेन ॥ ५० ॥

(५) (७) (९) (१)
चातुर्मासे शरमुनिनवेन्दौ श्रुतप्रोक्तरीत्या,
[२]
देवस्वोत्सर्पणविवदने वादगल्भान् विजेतु. ।
सूरेस्सङ्घार्पितनिखिलसद्ग्रन्थरत्नानि सङ्घो
[३]
'जैनानन्दश्रुतवरगृहे'ऽस्थापय'त्सूरतीयः' ॥ ५१ ॥

'सिद्धाद्रेर्जीवणनवलचन्द्रो'हि यत्प्रेरणातो,
यात्रासङ्घं विविधसुमहैः' पादचारं निनाय ।
कृत्वा यात्रां सह सुभविकैस्सूरिवर्यश्चकार,
[४]
'पालीताणे' गुहमुखमितां वाचनां साधुसङ्घे ॥ ५२ ॥

'पिण्ड-प्रज्ञापन-भगवतीनोघनिर्युक्तिका'श्च,
व्याख्यायो ह्य शुभमुपधानव्रतं भाविकानाम् ।
विज्ञप्ति'मालववसिमतां मानयित्वा च सूरि-
[५]
श्शिष्यै साकं किल 'रतिललामाख्यपुर्या' समेत ॥ ५३ ॥

धर्मोन्नत्या 'ऋषभसहितां केशरीमल्लनाम्नीं,
[६]
संस्थां' तत्राखिलजिनमतोद्भासिकां स्थापयित्वा ।
[७]
'व्याख्याप्रज्ञप्तिसमवयसूत्रादिप्रज्ञापना'नां,
[८]
चक्रे व्याख्यां कुलगिरिमितां वाचनां कत्तकामः ॥ ५४ ॥

'शैलाणाख्यं' पुरमथ यतीन्द्रो हि सङ्घाग्रहेण,
चातुर्मासार्थमुपगमितो धर्ममुद्धान् प्रबोद्धुम ।
मत्वा धन्यं नृपतिरपि गच्छाग्रवाचो निशम्या-
मार्युद्घोषं दयितहृदयस्स्वीयराज्ये चकार ॥ ५५ ॥

---

१ धर्मप्रभावनाया इत्यर्थ । २ उत्सर्पण(बोली)स्याशास्त्रीयताया देवद्रव्यस्य च चर्चासूचकमेतत्पदम् । ३ श्रीजैनानन्द-पुस्तकालये इत्यर्थ. । ४ षष्टीमित्यर्थ । ५ रतलामनगरे इत्यर्थ. । ६ खिलशब्दो हि विघ्नापरपर्यायोऽतोऽत्र निर्विघ्नतया जिनमतस्योद्भासकारिणीमित्यर्थो ज्ञेय । ७ छन्दोभङ्गभिया विहित श्रीसमवायाङ्गसूत्रार्थे एतादृशपदप्रयोग. मर्षणीय. धीधनै विद्वद्भि । ८ सप्तमीम् ।

पूर्णे[1] शैलाणनृपविषये' ह्यष्टमीरुद्रदर्शा-
ऽऽख्याताह्न पर्युपणदिवसे मारीचारं न्यषैधीत् ।
प्राच्यं वृत्तं ह्यकवरविबोध्धु स्मृतिं 'हीरसूरे'-
रानीयायाद्विविधनिगमान् पावयन् 'रत्नपुर्याम्[2] ॥ ५६ ॥

प्रेमक्षप्त्या श्रुतवरतपस्सम्यगुद्ग्राह्य चान्यैः-
पुण्यैः कृत्यैर्जलदसमये भ्राजयित्वा सुधर्मम् ।
'माण्डूतीर्थे'[3] प्रचलितविधौ वाधकं 'धारभूपं,'[4]
हस्तक्षेपोन्निरसविधये[5]ऽवोधयत्तत्र गत्वा ॥ ५७ ॥

'माण्डू-भोपावर'लसितसच्चैत्ययोस्स्वोपदेशा-
ज्जीर्णोद्धारं प्रवरभविकैः कारयित्वा यतीन्द्र ।
बोधं'पञ्चेडपुरपतये' 'सेमलीठक्कुराय,'
प्रादात्ताभ्यां निजभुवि ततो मारयो[6] वारिता वै ॥ ५८ ॥

वर्षाकाले जिनमतविभां वर्द्धयन् 'रत्नपुर्यां,'
शास्त्रैर्वादे यतिपविजयं[7] त्रिस्तुतीयं न्यजैषीत् ।
सङ्घस्याभ्यर्थनमथनिशम्योपधानं सुवाह्य,
'सम्मेताद्रिंव्रजितुमभिवङ्ग' प्रतस्थे मुनीन्द्र· ॥ ५९ ॥

मध्ये मार्गं निजप्रतिभया धर्मभासं वितन्वन्,
लोकं नानाविधमुपदिशान् 'कालिकाता'मयासीत् ।
(४) (३)
चातुर्मासे युगगुणमिते तत्र चैत्यादिधर्म्य-
स्थानस्थित्यै बहुतरनिधिः कारितो देशनात ॥ ६० ॥

---

१ अष्टम्यामेकादश्याममावास्याया पर्युषणासु चेत्यर्थ । २ रतलामनगरे । ३ माण्डवगढार्थपरकमिद पदम् । ४ धारसस्थानाधीशमिति भाव । ५ उत्कर्षेण निरसनार्थमित्यर्थ । ६ हिंसा । ७ श्रीयतीन्द्रविजयाह्वमितिभाव ।

(०) (२)

तीर्थेशानां खयमलमितानां सुनिर्वाणभूमे-

'स्सम्मेताद्रे' प्रथितयशस पुण्ययात्रामकार्षीत्।

राज्ञो 'दुद्धेडियविजअसिंह'स्य भक्त्या विहृत्य,

वर्षाहेतोस्सुमुनिपतयोऽजीमगञ्जे' न्यवात्सु ॥ ६१ ॥

बाबूलोकं विषयजसुखास्वादलीनं विबोध्य,

संवेगापूरितसुवचनैर्धर्ममार्गे न्ययुङ्क्त।

दीक्षाब्रह्मव्रतविधियुतानुत्सवान् कारयित्वा,

पावं पावं विविधनिगमान् 'सादडी'ग्राममापु ॥ ६२ ॥

पावं पावं जिनमतसुधीर्भव्यलोकं यतीन्द्र,

प्राग्वाटानां मरुजसहजं वैमनस्य चिरत्नम्।

कृत्वा दूरे श्रुततपविधि सोत्सवं कारयित्वा,

बोद्धुं धर्मं शिथिलकृतिकान् 'मेदपाट' विजह्रे ॥ ६३ ॥

१ (७) (३)

नीत्वा वर्षा'मुदयनगरे' सम्मितां धातुस्त्वै-

र्जग्मुस्सङ्घेन सह गुरव 'केशरीया'ख्यतीर्थम्।

२

तत्रौद्दण्डयं क्षपणककृत स्वीयबुद्ध्या व्यपास्या-

ध्यारोप्योच्चैस्सितपटयशोऽवर्धयन् सद्ध्वजं वै ॥ ६४ ॥

१

नग्नाटीयै प्रतिहतमथो धर्मतेजो विवर्द्ध्य,

न्यायागारेऽधिगतविजया आययुर्गूर्जरत्रान्।

चातुर्मासं सुमुनिसहिता ह्यम्मदाबादपुर्यां,'

तस्थुर्भव्यान् विविधममलं जैनतत्त्वं दिशन्त ॥ ६५ ॥

'माकुभ्रातु'र्विनतिवशगा 'आश्विनीं सङ्घचक्री-

मोलीं' दिव्यां नवपदमहो बोधिकां कारयन्त।

३

संस्थां संस्थाप्य च नवपदाराधिकां स्वोपदेशा-

४

द्धंग्मेन्सोसायटिविनयतंश्चख्युरास्तिक्यतत्त्वम् ॥ ६६ ॥

---

१ उदयपुरे। २ दिगंबरविहितम्। ३ श्रीनवपदआराधकसमाजस्थापनाया. सूचक अेष पाद। ४ विद्याशाला(डोशीवाडानी पोळ) मध्ये आस्तिक–नास्तिक चर्चा स्फोटस्वरूपप्रसिद्धव्याख्यानवार्ता सूचकोऽयं पादः।

तद्व्याख्यानात् क्षुभितमतिकान् शिक्षितान्[१] शास्त्रपाठे-

स्सन्तोष्यार्थं धनवितरणौचित्यतत्त्वं[२] विबोध्य।

याता 'श्रीदेशविरतिसमाजं' ततस्स्थापयित्वा,

'श्रीभोयण्या'मतिशुभमहैराद्यतन्मेलकाय[३] ॥ ६७ ॥

वर्षावासं निधि[(९)]गुण[(३)]मितं यापितुं 'ज्ञामपुर्यां'[४]

यान्तौ मार्गे'ऽहमदनगरे' 'तीर्थसिद्धाचलस्य'।

रक्षाहेतोस्सपदि निधये प्रेरयित्वा सुभव्यान्,

लक्षाधिक्यं द्रविणचयनं कारयामासुराशु[५] ॥ ६८ ॥

स्थाने स्थाने जिनमतमहं वर्द्धयन्तो गणीन्द्रा-

स्स्थित्वा वर्षा 'नवलनगरे'[६] चारुवाग्भिस्स्वकीयैः।

सत्र[७]चामाम्लगृहमथ चास्थापयन् छात्रगेहं[८],

दान्ताः[९] पूज्यै धृतिमतिबलात् बालदीक्षाविरुद्धाः ॥ ६९ ॥

पश्चादेता'स्सुरतनगरे' जैनसाहित्य[१०]वृद्धि-

सत्कोशार्थं धनिक'नगिनं मछुपुत्रं'[११]व्यबोधन्।

'मुर्शीदाबादपविजयसिंह'स्समेतोऽत्र सूरे-

र्भक्तिव्यक्तीकरणपटुको भावतो दर्शनाय ॥ ७० ॥

आसीच्छ्री'देशविरतिसमाजस्य' पर्षत्[१२]सुरम्या,

दत्ता तस्यां भविकहितदा देशना सारगर्भा।

'रत्नाम्भोधे'[१३]पठनसदनस्थायि कोशं विवर्द्धयं,

दृब्धा 'तत्त्वप्रसारणकरी बोधमालाख्यसंस्था' ॥ ७१ ॥

---

१ आंग्लशिक्षाप्रभावितान् नवयुवकानित्यर्थः। २ धनस्य व्यये दाने वा पात्रापात्रविवेकमित्यर्थः, एतद्धि तस्मिन् समये ज्ञानप्रचारनाम्नी भौतिकवादसमर्थककेलवणीपोषककॉलेज–हाइस्कूल–बोर्डिंगादीनां हिताहितकरत्वमीमांसा सूचक पदमस्ति। ३ श्रीदेशविरतिसमाजस्य प्रथमाधिवेशनायेत्यर्थः। ४ जामनगरे। ५ षष्टिसहस्राणि रूप्यकाना वार्षिक दत्त्वा तीर्थस्वामित्वनिर्णयस्यानुकूल्याय श्रीसिद्धाचलरखोपाफंडपोषणप्रवृत्तिरेतच्छ्लोके प्रदर्शितास्ति। ६ जामनगरमित्यर्थः। ७ सत्रं=भोजनशाला, आचाम्लगृह=आंबिलखातु। ८ बोर्डिंगाख्यविद्यार्थिगृहमिति भावः। ९ निष्फलप्रवृत्तिमत कृता इत्यर्थः। १० जैनसाहित्योद्धारकफंडमित्यर्थ। ११ नगीनभाई–मछुभाई–श्रेष्ठिनमित्यर्थ। १२ अधिवेशनमित्यर्थः। १३ श्रीरत्नसागरजैनबोर्डिंगस्थार्थिफंडमिति भाव।

प्रव्राज्यानेकभविकजनान् पावयन्त स्सुराष्ट्रान्,
प्रावृट्कालं शुभकृतिभरै'स्स्तम्भतीर्थे' व्यतीयु ।
सस्था प्याहम्मद्पुर'मितास्तत्रसंस्थाय वर्षा,
श्रुत्वोद्यच्छन् 'घटपुरनृपाज्ञां[1] सुदीक्षाविरुद्धाम् ॥ ७२ ॥

सूरेश्शास्त्राभ्यसनमुदिता जङ्गमज्ञानशाले-
त्येवं चाशंसदतिविदुषी जाभंनी क्राउझाख्या'।
(२) (४) [2]
नेत्राम्भोधिप्रमितजलमुक्काललाभस्पृहावन्-
मुम्बापुर्यां गतभविजनप्रार्थनातो विजह्रे ॥ ७३ ॥

शास्त्रव्याख्याप्रथितयशसो 'लालबागे' हि सूरे
र्दीक्षापुष्टि, प्रवचनविधेः क्षुव्धयूनां प्रचारैः ।
व्यामूढाया ऋजुजनततेर्मोहहत्यै समित्या,[3]
पत्रं संस्थाप्रथनजनितं चालितं 'सिद्धचक्रम्' ॥ ७४ ॥

'माणेकाम्भोनिधि'सदुपदेशात्प्रकृतोपधाने,
मालारोपोत्सवमुपगता 'घट्टकाद्रे पुरे'[4] वै ।
व्याख्यानैस्स्वैस्समयसहितैस्संयमायोग्यसूचि-[5]
नाट्यं रुद्धा युवजनमतं भासितं शीघ्नं हि ॥ ७५ ॥

पश्चाद्याता'स्सुरतनगरं' शिष्यवृन्दैस्समेता-
स्संवत्सर्यास्तिथिगतविसंवादमुन्मुच्य शास्त्रे ।
भाव्युत्सूत्राध्वगविषमता याञ्जसा व्यञ्जिता सा,
किन्नोऽद्यापि प्रकटविदिता वर्त्तते पर्वतिथ्या ? ॥ ७६ ॥

---

१ वडोदराराज्यदीक्षाप्रतिबन्धककायदार्थपरकमेतत्पदम् । २ चातुर्मासवाची अय शब्दः । ३ श्रीसिद्धचकसाहित्यप्रचारक-समिते स्थापनं सिद्धचक्राख्यपाक्षिकप्रारभ्येत्यर्थ. । ४ घाटकोपरे इत्यर्थ. । ५ दीक्षाया अयोग्यताप्रदर्शक युवकसंघप्रेरित नाटकमित्यर्थः ।

नानाप्रश्नोत्थितमतिगतभ्रान्तिशान्त्यै सुपर्षत्[1],
सङ्घायासात् सितपटमतालम्बिनां सद्यतीनाम् ।
० (९)(९)(१)
'आकाशाङ्काङ्कशशिसहिते वत्सरे राजपुर्यां[2],
जाता यस्यां यतिपतिवरास्सम्यगामन्त्रिता वै ॥ ७७ ॥

शङ्कापङ्कं भविकमनसो क्षालितुं दत्तचित्ताः,
गत्वा तत्र स्वकमतिभराच्छास्त्रपाठैश्च सर्वान्' ।
सन्तोष्यैता भविकविनयान्नोरदैस्साकमेवा-
सेक्तुं सांसारिकजनगणं सूरयो 'मेहसाणाम्' ॥ ७८ ॥

मध्ये[3] वर्षं सुबहु विहितश्शासनोन्नायिकार्यै-[4]
रत्नःक्षेत्रे[5] सुभविकनृणां धर्मपीयुषसेकः ।
यूरोपीयः श्रुतिपटपुटैर्'ब्राउनः' सूरिशंसां,
पीत्वाऽत्रेतो ह्यमृतवचनैर्वीततृड्कः शशंस ॥ ७९ ॥

काले काले पुनरपि पुनः सूरयः पालितेभ्यः,
शिक्षा-दीक्षा-वितरणमपि प्रायशो योग्यमेव ।
तस्मात् पादार्पणकरुणया पावयन्त्वेषमोऽस्मा-[6]
नेवंसङ्घादरभरभृतः संययुः' पालिताणाम् ॥ ८० ॥

चातुर्मासे गतवति यथा भ्राजते शारदी श्रीः,
पद्मव्याजैस्सरसि सरसा सन्ततं तद्वदेव ।
सज्ज्ञानश्रीरपि गुरुवराणां च सन्तन्यमाना,
नानारूपैर्नवनवमहैर्धर्मकृत्यैश्च रेजे ॥ ८१ ॥

---

१ समेलनमित्यर्थः । २ राजनगरे—अहमदावादे । ३ चातुर्मासमध्ये इत्यर्थः । ४ शासनप्रभावककार्यैरिति भावः ।
५ अन्तःकरणरूपक्षेत्रे इति भावः । ६ आता नहि ।

'श्रीमाणिक्य'[१] 'कुमुदविजय'श्चेत्युपाध्यायवर्यौ,
पन्न्यासौ द्वौ बहुगुणयुतौ 'भक्ति'ते-'पद्मा'भिधौ च।
अत्युत्साहैस्सह शुभकृपासिन्धुवद्भ्यो भवद्भ्यो
लब्ध्वाऽऽचार्याह्वयसुपदवीं धर्मभ्राजो विरेजुः ॥ ८२ ॥

'आनन्दस्याम्बुनिधि'रिति यद् वर्त्तते नाम सत्यं,
प्रत्यक्षन्तत् भुवि विदधती किं न जैनी प्रजाऽभूत्।
तस्मात् सूरीन् झगिति 'नगरे जामपूर्वे'[२]ऽपि सङ्घ,
प्रार्थं प्रार्थं कथमपि चतुर्मासवासाय निन्ये ॥ ८३ ॥

अज्ञैः कैश्चित् श्रुतकथितसिद्धान्तवाचा विरुद्धं,
प्रोक्तं वृद्धिक्षयविषयक पर्वतिथ्याः मत यत्।
उग्रं तत्खण्डनमथ कृतं शास्त्रदृष्ट्यापि लोकं
बोधित्वाऽरं नवमतवतो लज्जितास्यान् प्रचक्रुः ॥ ८४ ॥

तत्रैवाग्रे जलदसमये स्थापितो 'देवबाग-
लक्ष्म्या'नाम्नाऽऽश्रमवर उपादिश्य लोकं सुखेन।
पश्चाद् भक्तो 'नगरधनपः पोपटाह्व'स्सुभक्त्या,
सौराष्ट्रीयाखिलजिनपसत्तीर्थसंस्पर्शनाय ॥ ८५ ॥

सङ्घं नीत्वाचरणचलनं षड्रिसम्पालनोत्कं,
सानन्दोऽगात्[३], सकलमपि तद्वर्णनं चारुरीत्या।
'तीर्थाः सौराष्ट्रविषयभवाः सङ्घयात्रा च'[४] नाम्ना-
ख्याते ग्रन्थे लसति तदिवाऽऽयोकुमाकेतयन्द्रून् ॥ ८६ ॥

(संदानितकम्)

---

१ श्रीमाणिक्यसागरोपाध्याय श्रीकुमुदविजयोपाध्याय-श्रीभक्तिविजयपन्न्यास-श्रीपद्मविजयपन्न्यासेभ्य आचार्यपदप्रदानसूचकमिद पूर्वार्द्धम्। २ जामनगरे। ३ आनन्दसागरसूरीश्वरेण सहेत्यर्थ। ४ 'सौराष्ट्रना तीर्थो अने सघयात्रा' इत्याख्यग्रन्थे इति भाव।

(८) (४)
एवं वस्वब्धिमितमथ ये वृष्टिवासं जनानां,
पुण्याढ्यानामतिविनयतः 'सिद्धक्षेत्रे हि कृत्वा ।
[1]'खातारम्भं चरमजिनपस्याह्वया ह्यागमानां,
रक्षागेहस्य च' शुभविकैः कारयामासुरत्र ॥ ८७ ॥

अन्यत्तत्र[2] श्रमणनिकरग्रन्थसंग्राहि सद्मं,
संस्थाप्यारं शुभ'महमदावादपुर्या' यतीन्द्रा ।
भक्त[3]'श्रीमोहन' इति महच्छ्रेष्ठिना सद्व्रतानां;
रम्ये ह्युद्यापनविधिमखेऽभ्यर्थ्यमानाः प्रजग्मु ॥ ८८ ॥

सिद्धं शास्त्रैरुपकृतिकरं लक्षशो रूप्यकैस्तं,
सम्पाद्योद्यापनविधिमलं 'झाम्पडापोल' मध्ये ।
(५)(५)(९)(१)
तत्रावात्सु शरनवनवैकाङ्किते[4]ऽब्देऽब्दकाले,
चाव्यां[5] वीथ्यां सुगुरुचरणा 'नागजिद् भूधराणाम्' ॥ ८९ ॥

पश्चादेताः क्षरणसमयं[6] यापयित्वाऽऽगमाना[7]-
मागारस्य प्रचलितविधिं वीक्षितुं 'पालीताणाम्' ।
साङ्गोपाङ्गं त्रुटिविरहितं सत्यमारब्धकृत्य,
त्यक्त्वा सर्वस्वमपि सततं साधयन्त्येव सन्त ॥ ९० ॥

कृत्वा लोकोत्तरसुचरितं ये तरन्तीह लोकं,
धन्यास्ते वै सफलजनना भूमराः सन्ति चान्ये ।
सत्यामेतां भणितीमथ ते कर्तुकामा यतीन्द्रा-
स्तत्रातिष्ठन् वरसलिलदाऽऽसेककालत्रयीं[8] ते ॥ ९१ ॥

---

१ श्रीवर्धमानजैनागममंदिरस्य खातमुहूर्त्तमिति भावः । २ श्रमणसंघपुस्तकालयाख्यज्ञानालयस्थापनामित्यर्थः । ३ श्रेष्ठिवर्य-श्रीमोहनलाल छोटालाल इति भाव । ४ वृष्टिकाले । ५ पोलवाची अय शब्दो ज्ञेय. । ६ चातुर्मासमिति भावः । ७ शिलोत्कीर्णागममंदिरस्येत्यर्थः । ८ चातुर्मासत्रयमित्यर्थ. ।

दीर्घायासैर्गणधरवरप्रोक्तजैनागमानां,

पाठं शुद्धं दृषदुदरगं शिल्पविद्याप्रवीणैः ।

कारं कारं किमु न कलितं सूरिभिः कर्म चित्रं,

यस्माज्जातो ह्युपलनिकरोऽप्यागमज्ञ (आढ्य) परे के? ॥ ९२ ॥

रम्योपाध्यायकपदमदु 'श्रीक्षमासागरेभ्य,

श्रीमच्चन्द्रेभ्य उचितपदं चारु पन्न्यासकाह्वम् ।

वर्षे चाग्रे गणधरगृह[1] सिद्धचक्राह्वपूर्वं,'

संस्थाप्यैव[2] जिनमतविभाभासकं सत्समाजम् ॥ ९३ ॥

(९)(९)(९) १)

अङ्काङ्काङ्काब्जमितशरदि ह्यागमानां गृहस्य,

सत्यां पूर्त्तावभिनवप्रतिष्ठाविधिं माघमासे ।

पञ्चम्यामञ्जनशुभशलाकोत्सवेनापि सत्रां,

सन्मूर्त्तीनां श्रुतविधियुतं कारयामासुरत्र ॥ ९४ ॥

सम्पाद्यैवं 'कपडवणजश्रेष्ठिचीमनलाल-

डाह्याभाईत्यभिधपरमश्रावकप्रार्थनातः ।

निश्रायां सूरिवरसुगुरोश्चारु संयोजिताया

एताश्चैत्र्या नवपदसमाराधनायाः सुसिद्ध्यै' ॥ ९५ ॥

चातुर्मासं भविकहितकृच्चापि तत्रैव कृत्वा,

श्रीसङ्घस्यानुनयसहितप्रार्थना'न्मोहमय्याः' ।

धर्मोद्भासं विहृतिममलां कुर्वतां भक्तवृन्द-

स्थाने स्थाने मुदितमनसा स्वागतं सुष्ठु चक्रे ॥ ९६ ॥

---

१ श्रीसिद्धचक्रगणधरमदिरमित्यर्थः । २ श्रीजैनधर्मप्रभावकसमाजाख्यसंस्थास्थापनसूचकोऽयं पदसमूहः ।

शामं शामं चिरसमयजां सद्दिदृक्षा पिपासां,
व्याख्यानैः स्वैरपि च जनता अभ्यषिञ्चन् प्रकामम् ।
सम्प्राप्ता 'श्रीसुरतनगरं' यत्र चाभूतपूर्वं,
भव्यं भव्ये कृतमतितमां स्वागतं भासमानम् ॥ ९७ ॥

अर्धक्रोशादपि[1] चलसमारोह आसीद् दवीयान्,
यस्मिन् केतुप्रवर[2]लसितप्राग्रहस्ताश्च केचित् ।
सुप्रेष्ठा[3]स्संवरगुणमिता[(५७)] बेण्डवाघीयसङ्घाः (!)
वादं वादं शुभततघनानद्धवाद्यान् विरेजुः ॥ ९८ ॥

लक्षाधिक्या नगरजनता राजमार्गेऽभिसूरि,
शीर्षाण्युच्चैर्गुणरतिभरान्नम्रयन्ती बभूव ।
मार्गे मार्गे वसन-कुसुम-स्वर्ण-रुप्यादिपात्रैः,
श्चालं द्वाराण्यति विरचितान्यार्थ सद्भक्तिभावैः ॥ ९९ ॥

गिन्नीमुक्ताप्रभृतिसमुहर्घैश्च रत्नैर्गहूंली,
बद्धवजातश्शुचिगुणलसद् रागदाढ्यीद् यतीशे ।
स्वर्णैः रौप्यैर्वरसुम[4]भरैस्सत्यमुक्ता[5]सुलाजैः
प्रोद्यद्रङ्गं विविधसुमहैस्सत्कृतं'स्सूरतीयैः' ॥ १०० ॥

साम्बेलानां[(७)]भयशर[(५)]मितानां मुदापादिदीप्ति,
स्सूरेर्नानासुगुणमहिमाख्यायकास्साधुवादाः[6] ।
रीत्या चैवं प्रचुरनिरावर्णितुश्चाप्यक्या,
ग्रन्थाज्ज्ञेया प्रविशनकथा 'सागरस्वागता'-ख्यात् ॥ १०१ ॥

वक्खारीयाकुलजसुजनैः क्षत्रियैः मीलपै[7]र्वै,
पक्वान्हि विंशतिमियसहस्राधिकं रार्च्ययित्वा ।
सूरे पादार्पणमुदितया कारयित्वा सुभक्त्या,
पायं पायं जिनमतसुधां सूरिवक्त्राज्जहर्षुः ॥ १०२ ॥

---

१ स्वागतयात्रा (सामैयु) २ झंडा-निशानधारिण । ३ उत्तमा. । ४ श्रेष्ठकुसुमसमूहैः । ५ सत्यमुक्ताफलानां वर्धापनैरितिभावः ।
६ व्यवहारे हि एतच्छन्दार्थ. "साइन बॉर्डो" इतिपदेन कथ्यते। ७ अन्यालयपतिरिति ।

सत्रा सङ्घेन च विधियुता [1]चैत्ययात्रा सुरम्या-

ऽकार्यास्ते यद् समविवरणं मुद्रितं [2]पुस्तके वै।

सोत्साहं विंशतिमणमितान् मोदकान् संवितीर्य,

धन्या जाता 'सुरत'-जनता देशनादर्शनाभ्याम् ॥ १०३ ॥

चातुर्मासं तदनु विहितं '[3]मोह्मय्यां' प्रशस्तं,

यस्मिन् [4]धर्मोन्नतिततिकृतीः कारयित्वा सुबह्व्यः।

भूयोऽप्येतास्सुरतनगरं श्रावकाभ्यर्थनात-

स्तत्राभूवन् रुचिरचरमाः वृष्टिवासाश्च पञ्च ॥ १०४ ॥

२ ० ० २

द्वया-काशाभ्राक्षिमितशरदो [5]माधवे मासि शुक्ले,

ह्येकादश्यां शुभशनिदिने [6]श्रावकेभ्यः सुशास्ता।

संस्थाऽस्थापि प्रयतमनसा ताम्रपत्रागमानां,

भव्यादर्शस्थितिकरमहन्मन्दिरस्थापनायै ॥ १०५ ॥

[7]वर्षे चाग्रेऽ[8]हमदवरपूःश्रेष्ठिनो [9]माकुनाम्न

हस्ताभ्यामागमवरगृहस्यादिमं खातकर्म।

संस्कार्यारं तदनु च शिलारोपणं [10]वाडीलाले-

त्याख्यश्रेष्ठिप्रवरकरत कारितं मोदपूर्वम् ॥ १०६ ॥

३ ० ८ २

वर्षे रुद्रा-क्ष-ख-ख-मिथुने ह्याश्विने शुक्लपक्षे,

[11]आशातिथ्यां सुजिनप्रतिमा पालिताणात इद्धा।

[12]सद्विंशत्युत्तरशतमिता आगमागारहेतो-

रानाय्याकारि च सुविधिना तत्र भव्यप्रवेश ॥ १०७ ॥

४ ० ० २

'तुर्योद्र्धे-द्वयभ्र-नयन-मिते ह्यायने माघशुक्ले,

शुक्रे श्रेष्ठे [13]क्षणतिथियुते सन्मुहूर्त्ते समासाम्।

सन्मूर्त्तीनामपरिगणितोत्साहयुक्तैर्जनौघै-

रम्ये तस्मिन् श्रुतवरगृहे कारिता सुप्रतिष्ठा ॥ १०८ ॥

---

१ चैत्यपरिपाटीत्यर्थ । २ 'सूर्यपुरनु स्वागत' इत्याह इति शेष । ३ मुबाईनगरे । ४ धर्मस्योन्नतिविस्तार-कारिकार्याणीत्यर्थ । ५ वैशाखे इत्यर्थ । ६ श्रावकद्वारेत्यर्थ । ७ २००३ वर्षे इत्यर्थ । ८ अमदावादनगरवासिन इत्यर्थ । ९ माकुभाईत्यभिधया प्रसिद्धस्य माणेकलाल-मनसुखलालाख्यश्रेष्ठिन इत्यर्थ । १० मुंबापुरीयख्यातव्यापारि श्रीवाडीलाल चत्रभुजाह्वश्रेष्ठिकरत इत्यर्थ । ११ दशमीदिने। १२ १२० सख्याका । १३ क्षणशब्दस्य कालवाचित्वमत्र ज्ञेयं, कालस्य च भूतवर्तमानभाविरूपेण त्रैविध्यस्य विदितत्वात् तृतीयायामित्यर्थो वोध्य ।

संवत्सर्यास्तिथिवरसमाराधनायाः प्रसङ्गे-
ऽस्मिन्नेवाब्दे समुदितविसंवादनिर्यासकार्ये।
नैकैर्वर्षैः प्रचलितविधेर्ये श्रुतप्रोक्ततां वै,
संसाध्यान्यानपि जिनपथ. पोपणोत्कान् प्रचक्रु ॥ १०९ ॥

काले गच्छत्यविरतमितो ह्यग्रिमे पौपमासे,
कृष्णे पक्षे [1]शरतिथिगतेऽचिन्तितो वायुरोगः।
वृद्धिं यातो वहुतरचिकित्साविधि[2] सुयत्नात्,
सज्जा जातास्समुपचरिता किन्तु शान्तो,न जात ॥ ११० ॥

सैवाऽपूर्वा स्थितिरथ तदाऽऽसीन्नचाल्पाप्यशान्ति-
श्चेतोऽप्राक्षीज्जिनपतिपदेऽभूदपूर्वोऽनुरागः।
स्थित्यां तस्यामपि नवनवश्लोकनिर्माणकार्यं,
ज्ञानध्यानादिकमपि मनाङ् नावरुद्धं कदाचित्॥ १११ ॥

६ ० ० २ २
षड्-खा-काश द्वि-मितपरवाणौ पुनर्वायुवेगो
वारंवारं प्रवलरभसा पीडयामास देहम्।
मध्ये यस्य स्थितिपरवशाच्छ्रीनमस्कारमन्त्र-
स्यायातोऽभूदहह! सनतं श्रावणस्य प्रसङ्गः॥ ११२ ॥

आदे स्वभ्यस्तमथ च तथा देहास्थत्यादि सम्यग्
दार्ढ्यं येनेतरजनगणासह्यरोगेऽपि शान्त्या।
ये स्तम्भाद्याश्रयविरहिताश्चारु पद्मासनेन,
स्वेष्टस्मृत्यामथ निजमनो योजयामासुरारात्॥ ११३ ॥

दृष्ट्वाऽऽश्चर्यं भृशमुपगता डॉक्टरा अप्यवोचन्,
धन्या एते यदिह विषमस्थेऽपि रोगे सुशान्ता।
अन्यः कश्चिद् यदि गदहतोऽस्यां स्थितौ स्यात्तदा तु,
स्वान्तर्भीत. स खलु सहसान्यां दशामेव यायात्॥ ११४ ॥

---

१ पचमीतिथौ। २ अयशब्द सवत्सरापरपर्याय इति हैमलिंगानुशासने।

एवं रुग्णां स्थितिमथ निजां वीक्ष्य विज्ञाय चास्या-

ऽनित्यत्वं वै सपदि वपुषो माधवे[1] शुक्लषष्ठ्याम्।

सर्वानाहूय च निजशरीरं ततो व्युत्सृजन्तो-

ऽस्मार्षुर्भक्त्या जिनपतिवरान् ह्यर्धपद्मासनस्था ॥ ११५ ॥

एकादश्यां निशि कविदिनेऽप्येकवारं त्वतीव-

वेगादाक्रान्तिरभवदहा! येन सर्वेऽप्यचेष्टा।

सन्त्यक्ताशाः जिनवरवच श्रावयामासुराशु,

सत्पुण्यानामतिबलतया किन्त्वितं[2] दुर्दिनं तत्॥ ११६ ॥

[3]वैशाखस्यासितदलगते पञ्चमेऽह्न्यस्तकाले,

सूर्यस्याभूत् त्रिदशनिलये श्रीगुरूणां प्रयाणम्।

हन्ताकस्माद् सुरतजनताऽचिन्त्यदम्भोलिपाताद्,

भीता व्यग्रा प्रकृतिविधुरा कृत्यशून्या बभूव॥ ११७ ॥

सङ्घेनोच्चैस्तरशिखरिता चारु दोला ह्यकारि,

प्रासादस्यानुकरणकरी सत्कलाभिश्च युक्ता।

[4]विद्युत्पत्रैरधिगतसमाचारवन्तश्च भक्ता

ग्रामाद्ग्रामादरमुपगता[5] अन्त्ययात्रार्थमाशु॥ ११८ ॥

दोलोत्थानाय च कृतसहस्रादिमुद्रापणा वै,

भक्ताः स्वीयं मनुजजननं सार्थकीचक्रुरेव।

अन्ये प्रादुर्द्रविणनिचयं वह्निसंस्कारकार्ये,

भव्या यात्रा निखिलनगरे भ्रामिता भक्तिभावै.॥ ११९ ॥

पश्चाद्गोपीपुरपरिसरे स्वागमौकः[6]समीप,

संस्थित्यां चापरिमितजनानां गुरूणां सुभव्यम।

नानाकाष्ठैर्मलयगिरिजैर्दाहसंस्कारकृत्यं,

नाभूत् पूर्वं न च परमितो भावि तादृग् बभूव॥ १२० ॥

---

१ वैशाख मासे। २ किंतु इत = गतम् इति पदच्छेदोऽत्र बोध्य। ३ गूर्जरदेशीयपद्धत्येद ज्ञेय, पूर्णिमान्तमास (शास्त्रीय) पद्धत्या तु ज्येष्ठस्येति बोध्यम्। ४ तार-टेलिग्रामाख्याधुनिकशीघ्रसन्देशावहपत्रैरित्यर्थ। ५ अरम्=शीघ्रम्। ६ सुदरागममन्दिरपार्श्वे।

शिष्या पादोत्तरशतमिताः[१२५] अष्टत्रिंशत्[३८] सुसंस्थाः,
ज्ञानागारा मुनिमितमता[१२] सन्ति यत्कीर्त्तिदीपाः।
यैश्चाकारि श्रुतहितकरीर्वाचनाः सप्त[७] यासु,
ग्रन्था लक्षद्वयधिकगणितश्लोकमात्रा[१] ह्यवाचि॥ १२१ ॥

सप्तत्रिंशत्सुरपनयनाङ्काधिकाना[२] नवीन-
श्लोकानां ते भुवि रचयितारः कथ स्युर्न नम्या ।
ऊनाशीत्युत्तरगतशत[१७९]ग्रन्थसम्पादकास्ते,
धन्याः पञ्चाशदधिक[५०]शुभग्रन्थसङ्ग्राहकाश्च॥ १२२ ॥

व्याख्यानानामपि कतिपये ग्रन्थवर्याः प्रसिद्धाः,
येषां सन्ति प्रथितविभवा भूमिका[३] प्राथमिक्यः।
द्व्यनाशीति[७८]प्रमितरुचिरग्रन्थरत्नेषु येषां,
मार्गं लोकान् जनिहितकरं बोधयन्त्यो लसन्ति॥ १२३ ॥

आदित्याङ्का[१२] सुनतमुपधानव्रताः कारिता यैः,
शोधं शोधं सकलसुजिनोक्तागमानां सुपाठान्।
सच्छ्लोकानामुपकृतिहित मञ्जु मुद्रापयित्वा,
नैकान् योग्यानभ्यसकृतिनोऽधीतयेऽयूयुजॅश्च॥ १२४ ॥

एवं नानाव्रतजपतपोध्यानदीक्षाप्रतिष्ठा-
यात्रास्नात्रादिकबहुविधोद्यापनैश्चोपधानैः ।
भव्यान् जीवान् जिनपगदिते रम्यमार्गे नियुज्य,
त्यक्त्वा देहं सुरपतिगृहं संययु सूरिवर्या॥ १२५ ॥

---

१ २२३३४२ श्लोकप्रमाणग्रन्था वाचनासु वाचिता । २ सप्तत्रिंशत्सहस्रमितानामित्यर्थः। ३ प्रस्तावना इत्यर्थ ।

येषां कीर्ति विमलविमलामश्मताम्रागमाना-
मागारस्था दिशि दिशि दिशन्त्य पताका नितान्तम्
[1] यावच्चन्द्रारुणकिरणवन्तौ दिवि द्योतमानौ,
गायं गायं तदवधि मुदा रञ्जयिष्यन्ति लोकम्॥ १२६ ॥

## ॥ अन्त्यमंगलम् ॥

(शिखरिणी)

कृतं यैर्लोकानामुपकृतिहितं वाचनिकया,
श्रुतानामभ्यासस्त्रुटिविरहितः सम्प्रचलितः।
सुपूज्यॉस्तान् 'श्रीसागर'इति शुभाख्याप्रथितकान्,
नमामः सूरीन्द्रान् श्रुतवरसमुद्धारनिरतान्॥ १२७ ॥

### चित्र-हार-बन्ध *

(शार्दूलविक्रीडितम्)

शश्वच्छान्तिमयान् महामतिमतः कल्यङ्कारान्[2] कर्मठान्[3],
भव्यापत्तिभरापहान् जलजवज्जन्तुभ्य आनन्ददान्।
दान्तान् नौमितमां विभावितविधीन् व्याख्यानसव्यासनान्[4],
प्रौढान् सत्यसखान् सदा नतधियाऽऽनन्दाब्धिसूरीश्वरान्॥ १२८ ॥

(स्रग्धराछन्द)

धन्या मान्या वदान्या गुणिगणगणनास्वग्रगण्या महान्तो,
विद्वद्ग गरिष्ठाः जिनपतिचरणेन्दीवरेन्दिन्दिराश्च[5]।
वादीन्द्रा देशकेन्द्रा अविकलनिगमज्ञाततत्त्वा[6] मह्ष्ठिा[7].
'आचार्यानन्दवर्या' प्रथितगुणगणा 'सागरान्ता' जयन्ति॥ १२९ ॥

॥ आगमपर्यालोचनप्राण आगमोपजीवी च श्रमण
श्रामण्यसारमवाप्नोति लभते च निर्वृतिम्॥

## ॥ जीयासुरागमोद्धारकाः सद्गुरवः ।

१ यावच्चन्द्रार्काविवित्यर्थ । २ कल्यशब्दो हि कल्याणापरपर्यायभद्रवाचकस्तत भद्रङ्करानित्यर्थोऽत्र ज्ञेय. । ३ क्रियाकुशलान्। ४ व्याख्यानलब्धप्रतिष्ठानित्यर्थ । ५ तीर्थकृच्चरणकमलभ्रमरा इत्यर्थ. । ६ शास्त्रापरपर्यायोऽयम्। ७ पूज्या ।

* अय हि श्लोक आधुनिकभूषणपरिभाषया नेकलेसेत्याख्य स्वर्णमयरत्नहाररूपेण संयोजितोऽस्ति-उ तत्प्रतिकृतिरप्यस्मिन्नेव ग्रथे मुद्रिताऽस्त्यन्यत्र ।

॥ ॐ अर्हम् ॥

णमोऽत्थु णं समणस्स भगवओ महावीरस्स ।

शेठ देवचन्द्रलालभाइ-जैन-पुस्तकोद्धार-ग्रन्थाङ्के-१०१

आगमोद्धारक-आचार्यश्रीआनन्दसागरसूरिसङ्कलितः-

# अल्पपरिचितसैद्धांतिकशब्दकोषः

## अकारः

**अकः**-लाञ्छनम् । जीवा० पृष्ठ २७० । अङ्क, उत्सङ्गः । ओघ० १४३ । रत्नविशेष । जं० प्र० २३ ।

**अंककरेलुगं**-शाकविशेष । आचा० ३४८ ।

**अंकणं**-अङ्कनं, तप्ताय शलाकादिना चिह्नकरणम् । प्रश्न० २२ । लाञ्छनम् श्वशृगालचरणादिभिः । आव० ५८८ ।

**अंकधाती**-अङ्कधातृ, धात्रीदोषे । नि० चू० द्वि० ९३आ ।

**(अकपतिता)**-दासी । उत्त० २६२ ।

**अंकमुहसंठिया**-अङ्कमुखसंस्थिता, पद्मासनोपविष्टोत्सङ्गमुखवत् अर्धवलयाकार । सूर्य० ७१ ।

**अकलिवी**-लिपिविशेष । प्रज्ञा० ५६ ।

**अकवडेंसए**-ईशानकल्पपूर्वदिगावतंसक । भग० २०३ ।

**अकविद्या**-(अकविज्जा) गणितम् । जं० प्र० १३६ ।

**अकहरो**-अङ्कधर, चन्द्रमा । जीवा० २७० ।

**अकावइ**-अङ्कावती, वक्षस्कारपर्वतः । जं० प्र० ३५७ ।

**अकावई**-अङ्कावती, रम्यविजये राजधानी नाम । जं० प्र० ३५२ । शीतोदादक्षिणकूले वक्षस्कार । ठाणा० ८० । दक्षिणवर्ती वक्षस्कार । ठाणा० ३२६ ।

**अकावईओ**-महाविदेहे विजयराजधानी । ठाणा० ८० ।

**अकावडिंसए**-अङ्कावतंसक, ईशानस्य पूर्वस्यामवतंसक । जीवा० ३९१ ।

**अंकितो**-अङ्कित, चिह्नित । आव० ८२२ ।

**(अंकिल्ल)**-नर्तक । औप० ३ ।

**(अंकुडिओ)**-अङ्कुटिक, नागदत्तक, । जं० प्र० ५० । जीवा० २०५ ।

**अंकुर**-अङ्कुर, प्रवाल । जं० प्र० ३० ।

**अंकुर**-अङ्कुर, शाल्यादिबीजसूचि । भग० ३०६ । जं० प्र० १६८ ।

**अंकुल्ल**-अङ्कोठ । वृक्षविशेष । प्रज्ञा० ३१ ।

**अंकुसं**-महाशुक्रे विमानविशेष । सम० ३२ । अंकुशं, येन रजोहरणमङ्कुशवत्करद्वयेन गृहीत्वा वन्दते तत् । कृतिकर्मणि षष्ठदोषः । आव० ५४३ ।

**अंकुस**-अङ्कुश, सृणि । प्रश्न० २२ ।

**अंकुसपलंबं**-महाशुक्रे विमानविशेषः । सम० ३२ ।

**अंकुसयं**-अङ्कुशकम्, तरुपल्लवग्रहणार्थमंकुशाकृति । भग० ११३ ।

**अंकुसये**-अङ्कुशका, देवार्चनार्थवृक्षपल्लवाकर्षणार्थम् । औप० ९५ ।

**अंकुसो**-अङ्कुशः । अङ्कुशाकारो मुक्तादामावलम्बनाश्रयभूत । जीवा० २१० ।

**अंके**-अङ्ककाण्डं खरकाण्डे चतुर्दशं काण्डम् । जीवा० ८९ । अङ्क, । प्रज्ञा० २७ । उत्सङ्गे । जं० प्र० ३८ । मणिभेद. उत्त० ६८९ । श्वेतरत्नविशेष । प्रज्ञा० ३६१ । रत्नविशेषः । जीवा० २३ ।

**अंकेल्लण**-अकेलण, तर्जनकविशेष. । जं० प्र० २३५ ।

**अंको**-अङ्क, पृथिवीभेद । आचा० २९ । रत्नविशेष । भग० ४७९ । एकोरुमैथुनं । नि० चू० प्र० २५५आ । रूढिगम्य, शंखजातिविशेष । प्रश्न० ३७ । रत्नविशेष । जीवा० १८०, १९१ । पद्मासनोपविष्टस्योत्सङ्गरूप आसनबन्ध । सूर्य० ७१ । जं० प्र० ४५४ ।

**अंकोल**-गुच्छविशेष । प्रज्ञा० ३२ ।

**अंकोल्ल**–वृक्षविशेष । भग० ८०३ ।
**अंकोल्लाणं**–गुल्मविशेष । भग० ८०३ ।
**अंगं**–अङ्गम्, अङ्गविषयम् । आव० ६६० । कारणमवयव. । ठाणा० ३ । कारणम् । प्रश्न० १०३ । शरीरावयवप्रमाण-स्पन्दितादिविकारफलोद्भावकं शास्त्रम् । सम० ४९ । समग्रं वपु । जीवा० २७० । कारणम् । जं० प्र० ९९ । अज्यते व्यक्तीक्रियतेऽस्मिन्नित्यङ्गम् । आचा० ५ । भेद कारणं वा । दश० ९० । शिर-प्रभृति । दश० २३७ । आगं–अक्षिबाहुस्फुरणादिकम् । सूत्र० ३१८ । शिर स्फुरणादि । ठाणा० ४२७ ।
**अंग**–अङ्गानि । शिक्षादीनि षडङ्गानि । भग० ११४ ।
**अंगओ**–अङ्गकः, भद्रप्रकृतिक । आव० ७०४ ।
**अंगचूलिया**–अगचूलिका, अगानामुपासकदशाप्रभृतीनां पंचाना चूलिका–निरयावलिका । व्य० द्वि० ४५४आ ।
**अंगणं**–मंडवथाणं । नि० चू० प्र० १९२अ । अजिरम् । प्रश्न० १३८ । अङ्गग–षट्स्थंडिलभूमिस्थानम् । ओघ० २०० ।
**अंगणेत्रिका**–हस्तमालक आभरणविशेष. । औप० ५५ ।
**अंगदं**–वाहुशीर्षाभरणविशेष । जीवा० १६२ । केयूरम् । जं० प्र० १०६ ।
**अंगदे**–केयूरे । ठाणा० ४२१ । अङ्गनिका । उत्त० ७८ ।
**अंगनाम**–शिरउर पृष्ठवाहूदरपादनामानि । तत्त्वा० ८ ।
**अंगपडिहारिणि**–अन्त पुरप्रतिहारिणी । आव० ७०० ।
**अंगपविट्ठे**–गणधरकृतं मातृकापदत्रयप्रभवं वा ध्रुवश्रुत वा । ठाणा० ४९ । अङ्गप्रविष्टम् । ठाणा० २०० ।
**अंगप्रविष्टं**–गणधरदब्धमाचारादि । तत्त्वा० १–२४ ।
**अंगवाहिरे**–अङ्गबाह्यम्, स्थविरकृतं मातृकापदत्रयव्यतिरिक्त-व्याकरणनिबद्धमध्रुवश्रुतं वा उत्तराध्ययनादि । ठाणा० ५१ ।
**अंगमंगं**–अङ्गमङ्गम्, गात्रम् । औप० ११ ।
**अंगमंगो**–अङ्गमङ्गम्, अङ्गप्रत्यङ्गम् । जीवा० २७७ ।
**अंगमंदिरंमि**–चंपाचैत्याभिधानम् । भग० ६७५ ।
**अंगमद्दियाओ**–अंगस्वल्पमर्दनकारिका । भग० ५४८ ।
**अंगयं**–अङ्गदं, वाह्याभरणविशेष. । जीवा० २५३ । प्रश्न० ७१ । वाहुशीर्षाभरणविशेषरूपम् । प्रज्ञा० ८८ ।
**अंगय**–अङ्गके, मूर्द्धादौ । जं० प्र० १८९ । अङ्गदम्, वाह्या-भरणविशेष । भग० १३२ ।
**अंगरिसी**–अङ्गर्षि, आर्जवोदाहरणे भद्रक कौशिकार्यज्ये-ष्ठशिष्य । आव० ७०४ । येनोपशमे सत्यवाप्त सामायिकम् । आव० ३४७ ।
**अंगलोअं**–अङ्गलोकं, म्लेच्छजातीयजनाश्रयस्थानम् । जं० प्र० २२० ।
**अंगवंसो**–अङ्गवंश, अङ्गराजसन्तानस्य सम्वन्धिन· सप्त-सप्ततिराजान प्रव्रजिता । सम० ८५ ।
**अंगविगारं**–अङ्गविकार, शिर स्फुरणादिस्तच्छुभाशुभसूचकं शास्त्रमपि । उ० ४१७ ।
**अंगविज्जं**–अङ्गविद्याम्, शिर प्रभृत्यंगस्फुरणत शुभाशुभ-सूचिका विद्याम् । उत्त० २९५ ।
**अंगविज्जा**–अङ्गविद्या, अङ्ग–पाद विद्या–प्रासादपातनात्मिका (सत्कारपुरस्कारपरिषहे दृष्टांतपदम्) । उत्त० १२५ ।
**अंगहारिका**–नृत्यकलाद्वितीयभेद· । सम० ८४ ।
**अंगा**–अगा, जनपदविशेष· । प्रज्ञा० ५५ ।
**अंगाइं**–अगानि, शिर.प्रभृतीनि । प्रज्ञा० ४६९ । एकादशांगानि प्रज्ञा० ५६ । अवयवा· । ठाणा० १७० । शिर.प्रभृतीनि, । उत्त० ४२८ ।
**अंगाणं**–देशविशेष । भग० ६८० ।
**अंगादाणं**–मेढ्रम् । नि० चू० प्र० ११६अ ।
**अंगादानं**–मेहनम् । नि० चू० द्वि० ३०आ ।
**अंगारः**–(इंगाल), विगतज्वालोऽग्नि, । भग० १२२ । विगतधूमज्वालो दह्यमानेन्धनात्मक । उत्त० ६९४ । कृष्णवर्णवस्तु । आचा० २९ ।
**अंगारओ**–अगारकः, महाग्रह । जीवा० ३३६, ३३७ ।
**अंगारकारिका**–(इंगालकारिया), अग्निशकटिका । भग० ६९७ ।
**अंगारदोषः**–(इंगालदोस), आहाररागाद्गार्द्ध्याद्धु ज्ञानस्य चारित्रांगारत्वापादनाद् । आचा० ३५१ ।
**अंगारमर्द्दकः**–(अगारमद्दय) द्रव्यप्रव्रजित । दश० ११५ । उत्त० ५६६ । विशे० १०६४ ।
**अंगारय**–अगारक, मंगल । औप० ५२ ।
**अंगारवई**–अगारवती, सवेगोदाहरणे शिशुमारपुरपति-धुन्धुमारदुहिता श्राविका । आव० ७०९ ।
**अंगारवई प०**–अगारवती प्र० । आव० ६७ ।
**अंगारशकटिका**–(इंगालकारिया) । आचा० ३०९ ।
**अंगारा**–(इंगाल), लघुतराग्निकणा । ठाणा० ४२० ।

**अंगारियं**–अंगारकित, विवर्णीभूतम् । आचा० ३४९ ।
**अंगिरसा**–गौतमगोत्रोत्तरभेद । ठाणा० ३९० ।
**अंगुट्ठं**–अगुष्ठम् । आव० ८४५ ।
**अंगुट्ठपसिणा**–विद्याविशेष· । नि० चू० प्र० १७७अ ।
**अंगुट्ठिं**–स्नानम् । नि० चू० प्र० १९१आ ।
**अंगुट्ठी**–अगुष्ठी, शिरोऽवगुण्ठनम् । आव० ९५ ।
**अंगुलपुहुत्तिया**–अगुलपृथक्त्वम् । जीवा० ३९ ।
**अंगुलभावो**–अगुलभाव, शुभाशुभपदार्थ । विशे० ८७६ ।
**अंगुलिं**–अगुलि, करशाखा । आचा० ३८ ।
**अंगुलिको**–चर्ममयोपकरणम् । नि० चू० प्र० १३७अ । नखभंगादिरक्खट्ठा । नि० चू० द्वि० १८अ । अगुलिकोश, शृङ्गमयो दारुमयो वंशमयो वा येनाङ्गुलिसलमेन तन्त्री आहन्यते स । जीवा० १९५ । अगुलिकोशक, शृङ्गदारु-दन्तादिमय· । जं० प्र० ४० ।
**अंगुलिज्जं**–अंगुलीयकम्, अंगुल्याभरणविशेष. । औप० ५५ ।
**अंगुलिज्जग**–अंगुलीयकम्, मुद्रिका । जं० प्र० १०६ ।
**अंगुलिज्जयं**–अंगुलीयकम् । आव० १७० ।
**अंगुलिधणुहओ**–अंगुलधनु । आव० ४८४ ।
**अंगुलिभमुहा**–कार्योत्सर्गदोष । आव० ७९८ ।
**अंगुलिसत्थयं**–शस्त्रकोशविशेष । नि० चू० द्वि० १८अ ।
**अंगुलीयगं**–अगुलीयकं, भूषणविधिविशेष· । जीवा० २६९ ।
**अंगुले**–प्रमाणभेद ।भग० २७५। अंगुष्ठ–प्रश्नभेद । ठाणा० ३०१ । अंगुष्ठप्रश्न, शुभाशुभसूचक प्रश्न. ।उत्त० ४४६ ।
**अंगोवंगाइं**–अंगोपांगानि । प्रज्ञा० ४६९ ।
**अंगोहलिं**–अंगरुक्षणम्, देशस्नानम् । आव० ४१७ । व्य० द्वि० ४०५अ ।
**अंचइ**–अञ्चति, उत्पाटयति । जं० प्र० ४२१ । जीवा० २५५ ।
**अंचिअं**–अञ्चित, नृत्यविशेष । जं० प्र० ४१२ ।
**अंचिअंचियं**–उत्पतनिपतां पार्श्वत करोति । ठाणा० ५२२ ।
**अंचिओ**–अञ्चित, व्याप्त । आव० १६७ । अञ्चितनामा पञ्चविंशतितमो नाट्यविधि· । जीवा० २४७ ।
**अंचितरिभितं**–अञ्चितरिभितनामा सप्तविंशतितमो नाट्य-विधि । जीवा० २४७ ।
**अंचितांचि**–गमागम । भग० ६८३ ।
**अञ्चिते**–सकृद्गते । भग० ६८३ ।
**अञ्चियं**–दुर्भिक्ष· । नि० चू० प्र० १४८आ । दात्रसधी । नि० चू० प्र० १८३आ । नाट्यभेद । नि० चू० तृ० १अ । अञ्चितं, नाट्यम् । जं० प्र० ४१७ । आव० ३९९ ।
**अंचेइ**–आकुञ्चयति । औप० २५ ।
**अंछंति**–आकर्षन्ति । विशे० ३८३ । आव० ४८ ।
**अंछणं**–पण्हपसिरणं । नि० चू० प्र० १९१आ । अगुल्या लिप्तस्य रंगितस्य । ओघ० १४४ । आकर्षणं–समारणम् । ओघ० १४४ ।
**अंछमाणाणं**–आकर्षताम् । आव० ४८ ।
**अंछवियंछियं**–आकर्षविकर्षम् । आव० ८३२ ।
**अंछिऊण**–आकृष्य । आव० ४२७ ।
**अंछित्ता**–अपहृियतां माया । व्य० द्वि० ८४आ ।
**अंछिय**–आकृष्यते, प्रक्षाल्यते । बृ० प्र० ८१अ ।
**अंछियनयना**–आकृष्टनेत्रा· । प्रश्न० २१ । (जिब्भिन्दियं-छिय) आञ्छितम्-आकृष्टम् (आकृष्टजिह्वेन्द्रिया)। प्रश्न० ६० ।
**अंछिया**–आकृष्टा । आव० २२७ ।
**अंजणं**–आणतकल्पे विमानविशेष· । सम० ३५ । सौवीरा-ञ्जनादि । बृ० द्वि० ९२अ । सोवीरयं रसंजणं वा । नि० चू० प्र० ३१८आ । अञ्जनम्, सौवीरादि । आव० ५३० ।
**अंजण**–अञ्जनं, तद्याय शलाकया नेत्रयो म्रक्षणम् वा देहस्य क्षारतैलादिना । सम० १२६ । अञ्जनं, सौवीराञ्जनादि । प्रज्ञा० २७ । सौवीराञ्जनम् । जं० प्र० ६० । अञ्जना, अञ्जनरत्नमयत्वात् । ज० प्र० १६३ ।
**अंजणई**–वल्लीविशेष । प्रज्ञा० ३२ ।
**अंजणए**–अञ्जनक, वनस्पतिविशेष । औप० १० ।
**अंजणकेसिया**–अञ्जनकेशिका, वनस्पतिविशेष. । जं० प्र० ३३ ।
**अंजणकेसियाकुसुमं**–अञ्जनकेसिकाकुसुमम्, वनस्पति-विशेषपुष्पम् । प्रज्ञा० ३६१ ।
**अंजणगं**–अञ्जनक, पर्वतविशेषः । आव० ८२७ ।
**अंजणगपव्वय**–अञ्जनकपर्वत । आव० ३८९ । सम० ९० ।
**अंजणगा**–अञ्जनका, नन्दीश्वरचक्रवालमध्यवर्त्तिन· पर्वता । प्रज्ञा० ९६ । ठाणा० ४८० ।
**अंजणगिरि**–अञ्जनगिरि । जं० प्र० १९६ ।
**अंजणपव्वय**–अञ्जनपर्वत, नन्दीश्वरद्वीपे पर्वतविशेष । जीवा० ३५८ ।

**अंजणपुलए**-अञ्जनपुलककाण्डम्, एकादशं, अञ्जनपुलाकाना विशिष्टो भूभाग.। जीवा० ८९।

**अंजणप्पभा**-अञ्जनप्रभा, पुष्करिणीनाम। जं० प्र० ३६०।

**अंजणमओ**-अञ्जनमय', अञ्जनरत्नात्मक। जीवा० ३५८।

**अंजणसमुग्गयं**-अजनसमुद्गकम्। जीवा० २३४।

**(अंजणसिज्झ)**-अजनसिद्ध'। दश० १२८।

**अंजणा**-पर्वतविशेष। ठाणा० ८०। अजना, पुष्करिणीनाम। जं० प्र० ३३५। जं० प्र० ३६०।

**अंजणागिरि**-अजनागिरि, दिग्हस्तिकूटनाम। जं० प्र० ३६०।

**अंजणिं**-अंजनिका, कज्जलाधारभूता नलिका। सूत्र० ११७।

**अंजणे**-प्रभंजनेंद्रलोकपालः। ठाणा० १९८। सीतादक्षिणवर्ती तृतीयवक्षस्कार.। ठाणा० ३२६। अजन., वेलम्बाभिधानवायुकुमारराजस्य लोकपाल', वरुणस्य पुत्रस्थानीयो देव.। भग० १९८। सद्वप्रलापीमते कृष्णपुद्गलविशेषा'। सूर्य० २८७। अजनकाण्ड दशमं, अञ्जनानां विशिष्टो भूभाग.। जीवा० ८९। कर्मजीवमालिन्ये हेतुत्वात्। जं० प्र० १४८। अञ्जनो वक्षस्कार'। जं० प्र० ३५२। सौवीराञ्जनं रत्नविशेषो वा। प्रज्ञा० ३६१। रसाञ्जनादि। दश० १७०।

**अंजणेइ**-अञ्जनं, सौवीराञ्जनं रत्नविशेषो वा। जं० प्र० ३२। अञ्जनं, कृष्णरत्नविशेष। ठाणा० २३२। अञ्जनं सौवीराञ्जनादि। जीवा० २३। कज्जलम्। उत्त० ६५२। समीरकम् उत्त० ६८९। रजोभेद। आचा० ३४२।

**अंजणगपव्वय**-अंजनकपर्वत। सम० ९०।

**अंजलिं**-अञ्जलि', हस्तन्यासविशेष। सूर्य० ६। भग० १४। अञ्जलिं, मुकुलितकमलाकारकरद्वयरूपम्। जं० प्र० १८७।

**अंजली**-अञ्जलि, हत्थुस्सेहो। द० चू० १२९। नि० चू० प्र० ७अ। अञ्जलि, द्वयोर्हस्तयोरन्योऽन्यान्तरितागुलिकयो' सम्पुटरूपतया यदेकत्रमीलनं सा। जीवा० २४३। सयुतहस्तमुद्राविशेष। जं० प्र० १७। प्रसृतिद्वयम्। नि० चू० द्वि० १२०आ।

**अंजु**-ऋजु, ऋजो-संयमस्यानुष्ठानात्। आचा० २०३। मायाप्रपञ्चरहितत्वादवक्र। सूत्र० १७७।

**अंजुया**-शान्तिजिनप्रवर्तिनीनाम। सम० १५२। अंजुका, शक्रदेवेन्द्रस्याग्रमहिषी। जीवा० ३६५।

**अंजुल**-वनस्पतिविशेष। भग० ८०२।

**अंजू**-प्रगुणोऽव्यभिचारी। सूत्र० ५१। अंजू, व्यक्तम्, प्रगुणेन न्यायेन खरसप्रवृत्त्या वा। सूत्र० २९६। अंजु, व्यक्त, निर्दोषत्वात्प्रकट, (ऋजुर्वा) वक्रैकान्तपरित्यागादकुटिल। सूत्र० २९३। अंजू, सार्थवाहसुता। विपा० ३५। अञ्जु, धनदेवसार्थवाहसुता। विपा० ८८। शक्रस्याग्रमहिषीनाम। जं० प्र० १५९। भग० ५०५।

**अंजूए**-शक्राग्रमहिषीराजधानी। ठाणा० २३१।

**अंड**-अण्डम्, काष्ठनिश्रितो जीवविशेष'। आचा० ५५।

**अंडए**-अण्डज., हंसादि. ममायमित्युल्लेखेन वा प्रतिबन्ध., अण्डजं-पट्टसूत्रजम्। ठाणा० ४६५। हंसादि मयूराण्डकादिः वा अण्डज, पक्षी कोशिकारकीटाण्डकप्रभवं वस्त्रं वा। औप० ३६।

**अंडओ**-अण्डक, जन्तुयोनिविशेष। प्रश्न० ३३।

**अंडग**-अण्डकम्, आहार। भग० ३९२। मुख। व्य० द्वि० ३३३आ। अण्डजा', अण्डाज्जाता'। ठाणा० ११४।

**अंडय**-अण्डज, हंसादि.। भग० ३०३। अण्डजा, पक्षिगृहकोकिलादय'। दश० १४१।

**अंडसुहुम**-अण्डसूक्ष्मम्, मक्षिकाकीटिकागृहकोलिंकाब्राह्मणीकृकलासाद्यण्डम्। दश० २३०। अण्डसूक्ष्मम्, मक्षिकाकीटिकागृहकोकिलाब्राह्मणीकृकलास्याद्यण्डकमिति। ठाणा० ४३०।

**अंडु**-अण्ड, अन्दुकं काष्ठमयं लोहमयं वा हस्तयो' पादयोर्वा। औप० ८७।

**अंडे**-विपाकश्रुताद्यश्रुतस्कंधतृतीयाध्ययनम्। ठाणा० ५०७। ज्ञाताया तृतीयाध्ययनम्। आव० ६५३। सम० ३६। अण्डम्, षष्ठांगे तृतीयं ज्ञातम्। उत्त० ६१४।

**अन्तःकरणम्**-मनः। आव० ५८५।

**अन्तःशल्यः**-(अतोसल्ल), अन्त-मध्ये मनसीत्यर्थ, शल्यमिव शल्यमपराधपद यस्य सो अन्त शल्यो-लज्जाभिमानादिभिरनालोचितातिचार। सम० ३४।

**अंतं**-अन्त शब्दो मध्यवचन। विशे० १९७। परिजीर्णम्, । बृ० द्वि० १७५आ। वस्त्रस्य दशान्तम्। बृ० द्वि० २३५अ। अन्त्यम्, अन्ते भवम्, जघन्यधान्यम्। औप० ४०। अन्त्रम्-पुरीतत्। प्रश्न० ८। कुल्मापादिकम्। बृ० प्र० २२०आ।

**(अंतचरे)**-आन्तम्-अन्ते भवं-आन्तम्-भुक्तावशेषं वल्लादि (तच्चरति)। ठाणा० २९८।

अन्तयोः–अचलयो.। भग० ४७७। भूभाग. ।भग०१२२। अवसानम्। पज्ञा० ३९७। भूमिभाग । भग० ३२३। ठाणा० १३९। समीपम्। जं० प्र० ४५५। वल्लचणकादि। प्रश्न० १०६। समीप । ठाणा० ११७। अधिकरणप्रधान-मव्ययम्। उत्त० २६१। (अतचरे)–आन्तम्, अन्ते भवं आन्तम्, भुक्तावशेषवल्लादि (तच्चरति)। ठाणा० २९८।

**अंतंतं**–पर्युषितं वल्लचणकादि। ओघ० १८८।

**अंत**–अन्त, निश्चय । भग० २९०। परिच्छेद.। ठाणा० १७४।

**अंतओ**–अन्तक, विषतृष्णाया पर्यन्तवर्ती। सूत्र० २५९। अन्तकम्, पर्यन्तम्। उत्त० ६२८।

**अतकडे**–अन्तकृत्। भग० १११। अन्तो भवस्य कृतो येन सः अन्तकृत·। ठाणा० ३६।

**अंतकम्मं**–अन्तकर्म, अञ्चलकर्म वा न लक्षणम्। औप० ५५। अन्तकर्म्माणि, अञ्चलयोर्वा न लक्षणानि। ज० प्र० २७५। अन्तकर्म, अञ्चलयोर्वा न लक्षणम्। जीवा० २५३।

**अतकम्मा**–अन्तकर्मा, प्रान्त । औप० ११।

**अंतकरे**–अन्तकर, भवच्छेदकर । भग० २१९।

**अंतकरो**–अन्तकर, प्रशस्तभावकरविशेषः, कर्मण· समारस्य वा अतकर। आव० ४९९।

**अंतकिरिआ**–अन्तक्रिया, निर्वाणलक्षणा। आव० १३५।

**अंतकिरिय**–अन्त्य(न्त)क्रिया, अन्त्या च सा पर्यन्त-वर्तिनी क्रिया चान्त्यक्रिया। अन्त्यस्य वा कर्मान्तस्य क्रिया अन्तक्रिया। कृत्स्नकर्मक्षयलक्षणा मोक्षप्राप्तिम्। भग० ४९।

**अंतकिरिया**–अन्तक्रिया, अन्त.–कर्मणामवमानं तस्य क्रिया–करणम्, कर्म्मान्तकरणं मोक्ष इति। प्रज्ञा० ३९६। निर्वाणम्। भग० ९१। प्रज्ञापनाया विंशतितम पदम्। प्रज्ञा० ६। मोक्ष । सम० ११८। भवस्यान्तकरणम्। ठाणा० १८०।

**अंतकुलाणि**–अन्तकुलानि–वरुटछिम्पकादीनाम्। ठाणा० ४२०।

**अंतक्खरिया**–लिपिविशेष । प्रज्ञा० ५६।

**अंतगडदसा**–अन्तकृद्दशा, अन्तो–भवान्त कृतो विहितो यैस्तेऽन्तकृता·, तद्वक्तव्यताप्रतिवद्धा दशा –दशायध्यनरूपा ग्रन्थपद्धतय इति। अन्त० १।

**अंतगडो**–अन्तकृत्, ज्ञानावरणीयादिकर्म्मान्तकृत्। आव० १६३। तेनैव भवेनेति। आव०, ११७। अन्तकृता.– तीर्थकरादय·। सम० १२१।

**अंतगतावधिः**–(अतगतावही)–आत्मान्तगत, शरीरान्त-गत, अवधिक्षेत्रान्तगत (पुर पृष्टपार्श्वेषु)। प्रज्ञा० ५३७।

**अतगो**–अन्तक·, विनाशकारी, आत्मनि वा गच्छतीति; आन्तर आतमगो वा। सूत्र० १७८। अन्तग, अन्तं गच्छतीति, दुष्परित्यज्य। सूत्र० १७८।

**अंतचारी**–अन्तचारी, पार्श्वचारीति। ठाणा० ३४२।

**अतदीवगं**–सव्वेहिं अभिसवज्झात अमज्जमसासी भवेज्जा। दश० चू० १६३।

**अंतदीपकम्**–प्रागुक्तेष्वपि समन्वय । विशे० ३३०।

**अंतद्धाणं**–अदृश्य.। नि० चू० प्र० ७६ अ।

**अतद्धाणपिंडो**–अप्पाणं अतरहितं करेत्ता जो पिंडं गेण्हति सो अतद्धाणपिंडो भण्णति। नि० चू० द्वि० १०२ अ।

**अंतरं**–उववासो। नि० चू० प्र० १७४ आ। अन्तर प्राप्ति । विशे० २४७। मज्झं। नि० चू० तृ० १४० अ। समुद्रमध्यम्। उत्त० ७००। उत्तरम्। आव० ४४२। विशेष । उत्त० २१७। अवसर । आचा० १०७। अवकाश.। प्रज्ञा० ६९। मध्य.। जीवा० ४६। शैलान्तरम्–कन्दरान्तरम्, वनान्तरम् वा आश्रयरूप। प्रज्ञा० ६९। अन्तरालम्। आव० ३३। विशेषो रूपनिर्म्माणादिभि । ठाणा० २०३। पूर्वत्यागापरवस्त्रादानकाले–प्रतिमाविशेष । नि० चू० द्वि० १६३ आ। पार्श्वरूपम्। जं० प्र० ३८७। व्यवधानम्। जीवा० १२२। अन्तरायम्। ओघ० १७६। उपवास। आव० २०३। राजगमनस्यान्तरम्। विपा० ५३। अवसर । विपा० ७३। अपान्त-रालम्। सूर्य० ४९। अवसर·। प्रश्न० ४२। ग्रामादीनामर्धपथ । प्रश्न० ५२। पृष्ठोदरयोरन्तरालं पार्श्वे इति। जीवा० २७७। विचालं। व्य० प्र० १२८ अ।

**अंतरंजिया**–अन्तरञ्जिका, नगरी यत्र त्रैराशिकदृष्टिरुत्पन्ना, बलश्रीराजधानी। उत्त० १६८। पुरी यत्र त्रैराशिकनिह्नवस्य दृष्टिरुत्पन्ना। आव० ३१८। नगरी। विशे० ९८१।

**अंतरंत**–अतरतो नाम असहा मूधा। व्य० द्वि० १० आ।

**अंतरंतगो**–गिलाणो। नि० चू० प्र० १९८ अ।

**अंतर**–वस्त्रैषणाभेद । आचा० २७७। अन्तरशब्दो मध्यवाची । प्रज्ञा० ५०। अन्तरे, पृष्ठोदरयोरन्तराले, पार्श्वे। जं० प्र० ११७। अतराणि–पार्श्वदेशः । प्रश्न० ८३ ।

**अंतरकंदे**–अन्तरकन्द । जलजवनस्पतिविशेषकन्द । प्रज्ञा० ३७ ।

**अंतरकरणं**–औपशमिककाल । प्रज्ञा० ३८७।

**अंतरगए**–अन्तरगत, संस्पर्शी। सूर्य० ७९ ।

**अंतरगामम्मि**–अपान्तराल एव यो ग्रामस्तस्मिन्। ओघ० ७७ ।

**अंतरगिरिपरिरिओ**–अन्तर्गिरिपरिरय, गिरेरन्त. परिक्षेप । जीवा० ३४३ ।

**अंतरजातम्**–भावभाषाजातः तृतीयो भेद । अन्तरे भाषाद्रव्यमिश्रणं। आचा० ३८५।

**अंतरतेणो**–गामदेसंतरेसु हरंतो। नि० चू० द्वि० ३८ आ।

**अंतरदीव**–अन्तरद्वीप । भग० ४२५।

**अंतरदीवगा**–अन्तरद्वीपगा, अन्तरे लवणसमुद्रस्य मध्ये द्वीपा अन्तरद्वीपा, तद्गता अन्तरद्वीपगा । प्रज्ञा० ५०।

**अंतरदीवगो**–अन्तरद्वीपः, लवणसमुद्रमध्ये अन्तरेऽन्तरे द्वीप । जीवा० १४४ ।

**अंतरदीविगा**–आन्तरद्वीपजा । ठाणा ११५ ।

**अंतरद्धा**–अन्तर्द्धानम्, भ्रंश। आव० ८२७।

**अंतरद्धाए**–अन्तरकालेऽर्धसलिखिते देहे । आचा० २९१।

**अन्तरद्वीपजा:**–अन्तरम्, इह समुद्रमध्यं तस्मिन् द्वीपास्तेषु। उत्त० ७०० । अन्तरद्वीपजा, सम० १३५। अन्तरद्वीपा, अन्तरम्। इह समुद्रमध्यं तस्मिन् द्वीपा । उत्त० ७०० ।

**अंतरपल्ली**–अन्तरपल्लिकाऋषभग्रामयोरन्तरालम्। बृ० प्र० ३०५।

**अंतरपल्ली**–बहि सन्निवेश. । नि० चू० प्र० ३३६अ । मूलग्रामादर्धतृतीयगव्यूतान्तर्गतो ग्रामः। बृ० तृ० १२१ आ। तस्माद्ग्रामात्परतो योऽन्य आसन्नग्राम । ओघ० १०४।

**अंतरभासिल्ल**–अन्तरभाषिल्ल, अन्तरभाषावान्, गुरुवचनापान्तराल एव स्वाभिमतभाषक । उत्त० ५५२।

**अंतरभासा**–अन्तरभाषा, आचार्यस्य भाषमाणस्यान्ते यद्भाषते सा। आव० ७९२।

**अंतरवीहिअं**–अन्तरवीथी, अवान्तरमार्ग । ज० प्र० १८८।

**अंतरा**–अगृहीतवीप्सा । जीव० १९९ ।

**अंतराइयदोसो**–अन्तरायिकदोष, अन्तर्भवो दोष. । आव० ८३८ ।

**अंतराए**–अन्तराय., शक्त्यभाव । सूत्र० १८४। अन्तरायिक ( मध्यभव )। आचा० ३४० ।

**अंतराणि**–उत्कर्षापकर्षात्मकविशेषरूपाणि निवासभूतानि वा गिरिकन्दरविवरादीनि । उत्त० ७०१।

**अंतरापहे**–अन्तरापन्था, अन्तरालमार्ग । भग० ११६।

**अंतरायं**–अन्तराय, असज्झायस्वाध्यायादिभि । आव० ५८० ।

**अंतरालं**–अन्तरालं, अन्तरम् । उत्त० ३८१ । आव० ३३ ।

**अंतरावणं**–अन्तरापण । उत्त० २२२ । आवणान्तरम् । उत्त० २०९ । राजमार्गमध्यभागवर्तिहट्टम्। विपा० ५८।

**अंतरावासं**–वृष्टेरवसर, वर्षाकालश्च । भग० ६६ ।

**अंतरिए**–लघ्वन्तररूपा । जं० प्र० ४९ ।

**अंतरिओ**–अन्तरित, । आव० ४२९ ।

**अंतरिका**–अन्तरस्य–विच्छेदस्य करणमन्तरिका। जं० प्र० १५० ।

**अंतरिक्खं**–अन्तरिक्षं, आकाशप्रभवंग्रहयुद्धभेदादिभावफलनिवेदकशास्त्रम् । सम० ४९ ।

**अंतरिक्खो**–मेहो । दश० चू० ११४।

**अंतरिच्छा**–अन्तरेच्छा, अन्तरा–मध्ये इच्छा–अभिमतवस्त्वभिलाष । उत्त० ४७४।

**अंतरिज्जं**–अतरिज्जं णाम पाउरणं अथवा जं सिज्जाए हेट्ठिल्लापात्त। नि० चू० द्वि० १६३ आ ।

**अंतरिया**–अन्तरिका । सूर्य० १४१ । लघ्वन्तररूपा । जीवा० २०४ । विच्छेदकरणम् । भग० २२० ।

**अंतरीयं**–परिधानं । बृ० प्र० ९८ अ ।

**अंतरुच्छुअं**–इक्षुपर्वमध्यम् । आचा० ३५४।

**अन्तरे**–पथि। ओघ० ६६ । मध्ये परस्परविभाग । ठाणा० २२७। अन्तरे, अन्तराले। उत्त० ३८१ । अन्तरे, अवसर । भग० ३८१।

**अंतरो**–अन्तर., अवसर । आव० ४२१ ।

**अंतरोदगाणं**–अन्तरोदकानाम्, जलान्तर्वर्तिसन्निवेशविशेषाणाम्। जं० प्र० २७७।

**अंतर्मुहूर्त्तम्**–मुहूर्तस्यान्तरं, मुहूर्त्तमपि न्यूनम्। उत्त० ६९७। भिन्नमुहूर्त्तम्। जीवा० १३०।

**अंतर्हित**–(अतद्धिओ) अदृश्य। ठाणा० ५१३।

**अंतलिक्खं**–अन्तरिक्षं, ग्रहभेदादिविषयम्। आव० ६६०।

**अंतलिक्ख**–अन्तरिक्षम्, नभः। दशं० २२३। अमोघादिकम्। सूत्र० ३१८।

**अंतलिक्खं**–अन्तरिक्षम्–गंधर्वनगरादि। ठाणा० ४२७।

**अंतवाले**–अन्तपाल, अन्तं–त्वदादेश्यदेशसम्बन्धिनं पालयति–रक्षयति उपद्रवादिभ्य इति। जं० प्र० २०३।

**अंतसो**–अन्तश, निरवशेषतः। सूत्र० १७१।

**अंताः**–अवयवा। उत्त० ४५९। उत्त० ५८५।

**अंता**–अते ठिता, ण अता अणंता। नि० चू० प्र० २५५ आ।

**अंताक्षरिका**–(अतक्खरिया) क्रीडाविशेष। उत्त० ४७।

**अंतिए**–अन्तिके, समीपे। भग० ९०। उत्त० २७७।

**अंतिमधन्नं**–अतिमे–अकस्थाने परिमाणं। व्य० प्र० ७६।

**अंतिमराइयंसि**–रात्रेरवसाने। ठाणा० ५०२। भग० ७११।

**अंतिमसरीर**–अन्तिमशरीरम्, चरमशरीरम्। भग० २१९।

**अंतियं**–समीपम्। भग० ६५९। अत्यन्तमरणं, मरणस्य तृतीयो भेद। उत्त० २३०। आन्तिकं, मामीप्यम्। आव० २६७।

**अंतिय**–अन्तिकम्, आसन्नम्। भग० २१७। अत्यन्तमरणम्। उत्त० २३०।

**अंतिया**–आन्तिकी समीपाभ्युपगता। उपा० १५।

**अंते**–अन्त, पर्यन्त, अतिदूरं वा। सूत्र० २०४। अन्ते, अग्रे। उत्त० ६०१। परिसमाप्ति। बृ० द्वि० १९९ आ।

**अंतेउरे**–(आत पुरिकी), आतुरस्य नाम गृहीत्वा आत्मनोऽगं प्रमार्जयति–आतुरश्च प्रगुणो जायते। व्य० द्वि० १३३ आ।

**अंतेण**–मार्गेण। नि० चू० प्र० ६ आ।

**अतेणं**–आन्त्रेण। ठाणा० ५०२।

**अंतेवासि**–भर्तृज्जुका। नि० चू० प्र० २५० अ।

**अंतेवासी**–शिष्य। जं० प्र० १५। भग० ११।

**अंतेहि**–अरसतया सर्वधान्यान्तवर्तिभिर्वल्लचणकादिभि। भग० ४८४। रागद्वेषौ। आचा० १५८। आचा० १६६।

**अंतो**–अन्तो, विभाग। भग० ३९३। विभागं। ठाणा० ३८०। अन्त, परिच्छेद। प्रज्ञा० ५३२। मार्गः। आव० ४०२। अन्तः निवेशनस्य। आव० ७४५। अन्तो, रोग, भङ्गः, विनाश। विशे० १३०७। अन्त, मध्यभागे। जीवा० २०१। मार्ग। आव० ६८६। विभाग। जं० प्र० ४५९। भिन्नम्। आव० ५८४। मार्ग। आव० ४८५। आव० १८९। मध्ये। प्रज्ञा० ४७। इन्द्रियाननुकूल आश्रय। प्रश्न० १३८। मध्यकरणम्। आव० ५८३। चतुर्दशभेदान्तरग्रन्थ। उत्त० २६१।

**अंतोजलगयपव्वय**–जलान्तर्गतपर्वत। उत्त० २६४।

**अंतोधूमं**–अभ्यन्तरधूमम्। आव० ६६२।

**अंतोनायं**–अन्तोनादं, हृदये सदुःखमारसन्। आव० ६६१।

**अंतोनियंसणी**–निर्ग्रंथ्युपकरणविशेषः। ओघ० २०९।

**अंतोमुहुत्त**–अन्तर्मुहूर्त्तम्, भिन्नमुहूर्तम्। भग० २९। उत्त० ६९७।

**अतोवणीते**–आहरणतद्दोषविशेष। ठाणा० २५३।

**अंतोवाहिणी**–अन्तर्वाहिनी नदी। जं० प्र० ३५७। ठाणा ८०।

**अंतोवेइया**–प्रतिलेखनादोष। नि० चू० प्र० १८२ अ।

**अंतोसंबुक्कावट्टा**–गोयरपिंडेसणाए कमेणं तिं, तत्थ गोयरातिमे अभिग्गहविसेसतो जाणियव्वा। नि० चू० तृ० १२ अ।

**अंतोसल्लं**–अन्तःशल्यमरणम्। मरणस्य षष्ठो भेद। उत्त० २३०।

**अंतोसल्लमरणे**–अन्तःशल्यमरणम्, अन्तःशल्यस्य द्रव्यतोऽनुद्धृततोमरादे, भावत सातिचारस्य यन्मरणं तत्। भग० १२०। सम० ३३।

**अंतोहिंतो**–गृहादेर्मध्याद्बहिर्नयन्त। ठाणा० ३५३।

**अंत्यः**–आनुपूर्व्यन्त्यपक्त्यका। सूत्र० १०। विशेषम्। ठाणा० ३९१।

**अंदुकम्**–हस्तिबन्धनविशेष। उत्त० ४११।

**अंदेरे**–गुच्छाविशेष। प्रज्ञा० ३२।

**अंदोलगा**–पक्ष्यन्दोलकाश्च तत्र यत्रागत्य २ मनुष्या आत्मावमन्दोलयन्ति। जं० प्र० ४४।

**अंदोलगो**–आन्दोलक यत्रागत्य मनुष्या आत्मानमन्दोलयति सः। जीवा० २००।

**अंध**–अन्ध, अज्ञान। भग० ३१२।

**अंधकण्टकीयम्**–अतर्कितसम्भवो न्यायविशेष। आचा० १८।

**अंधकारे**–अन्धकारम्, तमोरूपम्। भग० २७०।

**अंधकारेति**–तमस्कायनाम। ठाणा० २१७।

**अंधगवण्हिणो**–अह्निपा–वृक्षास्तेषा वह्नयस्तदाश्रयत्वेनेत्यं-ह्निपवह्नयो बादरतेजस्कायिका। भग० ७४६।

**अंधगवण्ही**–अन्धकवृष्णि, द्वारवत्यां राजा यादवविशेष। अन्त० २। दश० ९७।

**अंधतमसं**–अन्धतमसम्। आव० ३६६।

**अंधपुरं**–नगरविशेष। बृ० तृ० १०८ आ०। नि०चू० द्वि० ४२आ।

**अंधप्रदीतपलायनम्**–(अधपलितपलाणं)। दश० १५८।

**अंधमूढि**–अविमर्शकारिता। आचा० ६२।

**अंधयं**–अन्धकम्, नयनयोरादित एवानिष्पत्ते, कुत्सिताङ्गम्। विपा० ३६।

**अंधलीभूय**–अन्धीभूत। आव० ६८८।

**अंधिय**–चतुरिन्द्रियविशेष। प्रज्ञा० ४२।

**अंधिया**–चतुरिन्द्रियजीवभेद। उत्त० ६९६। चतुरिन्द्रिय-जन्तुविशेष। जीवा० ३२।

**अंधिल्लगो**–अन्धिल्लक, जात्यन्ध। प्रश्न० १६२।

**अंधीयताम्**–अन्धीभवतु। दश० १०६।

**अंधो**–अन्ध, चिलातदेशनिवासी म्लेच्छविशेष। प्रश्न० १४।

**अंधोपल**–(अधोवल), अन्धपाषाण। दश० ४०।

**अंधोपलादिः**–छायारहितपाषाण। विशे० ९१८।

**अंध्र**–(अध), अध्रादिदेशोद्भवा म्लेच्छप्राया, आर्यभाषामजानाना। व्य० द्वि० २८अ।

**अंध्री**–(अधी), अन्ध्रदेशीया स्त्री, उत्कृष्टरूपा। आव० ५८१।

**अंब**–अम्लवचनयोगाद् परुषवचनव्यवहार। व्य० प्र. २५६।

**अंब**–आम्र। प्रज्ञा० ३१।

**अंब**–आम्रम्। प्रज्ञा० ३२८। फलविशेष। प्रज्ञा० ३६४। थोवेण ऊणं अबं भण्णति। नि० चू० द्वि० १२४आ।

**अंबए**–अग्रप्रलंबविशेष। बृ० प्र० १४३आ।

**अंबकंजिय**–सुगंधिकाञ्जिकम्। ओघ १६०।

**अबकुज्जं**–पादतलमध्यम्। बृ० द्वि० २२३ आ।

**अंबकूणए**–आम्रास्थिकम्। भग० ६८१।

**अंबकूणगहत्थगए**–आम्रफलहस्तगत। भग० ६८४।

**अंबक्खलगं**–अम्लखलम्। आव० ३५३।

**अंबखुज्ज**–आम्रकुब्ज, आम्रफलवत् कुब्जो वक्र। भग० ९०। पादतलमध्यम्। बृ० द्वि० २२३ अ। तं०

**अंबगपाणगं**–पानकविशेष। आचा० ३४७।

**अंबगपिंडी**–आम्रपिण्डी। आव० ६९७।

**अंबचोयए**–आम्रत्वक्। भग० ६८१।

**अंबचोयगं**– ,, आम्रछल्ली। आचा० ४०५।

**अंबजुज्झं**–पादतलमध्यम्। नि० चू० प्र० १३७ अ।

**अंबट्ठ**–अम्बष्ठ, ब्राह्मपुरुषेण वैश्यस्त्रियां जातो वर्ण.। आचा० ८।

**अंबट्ठो**–अम्बष्ठ, ब्राह्मणेन वैश्याया जात। उत्त० १८२।

**अंबडे**–अम्बड, माहणपरिव्राजकभेद। औप० ९१। (अमड) परिव्राजकविद्याधरश्रमणोपासक। ठाणा० ४५७। अम्बड.। सम० १५४।

**अंबडो**–अम्बड, अमूढदृष्टित्वोदाहरणे लौकिकऋषि.। दश० १०२। सुलसाश्राविकापरीक्षकपरिव्राजक। व्य० प्र० १८ आ। म्लेच्छविशेष। प्रज्ञा० ५५। अम्बडपरिव्राजक। प्रज्ञा० ६१।

**अंबपलंबं**–फलविशेष। आचा० ३४८।

**अंबपेसी**–आम्रफाली। आचा० ४०५।

**अंबप्पहारो**–प्रहारार्त्त.। उत्त० १९३।

**अंबभित्तयं**–आम्रार्द्धम्। आचा० ४०५।

**अंबय**–आम्र। आव० ४१७।

**अंबयरुक्खे**–अष्टादशजिनचैत्यवृक्ष। सम० १५२।

**अम्बरतलम्**–(गगनयल)। सूर्य० २६४।

**अंबरवत्थं**–अम्बरवस्त्र, स्वच्छतयाऽऽकाशकल्पम्। ज० प्र० ४०६। स्वच्छतयाऽऽकाशकल्पवसनम्। भग० १७४।

**अंबरसे**–अम्बा–पूर्वोक्तयुक्त्या जलं तद्रूपो रसो यस्मात् तन्निरुक्तितोऽम्बरसम्। भग० ७७६।

**अंबरिस**–अम्बरीष, द्वितीय परमाधार्मिक। भग० १९८।

**अंबरिसी**–नारकान् कल्पनिकाभि खण्डश कल्पयित्वा भ्राष्ट्रपाकयोग्यान् करोति। सम० २८। अम्बर्षि, द्वितीय परमाधार्मिक। सूत्र० १२४। पञ्चदशसु परमाधार्मिकेषु द्वितीय। उत्त० ६१४। नरके द्वितीयः परमाधार्मिक। आव० ६५०। विनयविषये उज्जयिन्यां ब्राह्मण श्रावक। आव० ७०८।

**अंवरिसे**–अम्बरीष., कोष्टक । जीवा० १२४ । अम्बरीषम्–भ्राष्ट्रम् । प्रश्न० १७ । अम्बरीषा–भ्राष्ट्र आकरणानि । ठाणा० ४१९ ।

**अंवले**–अम्बराणि । बृ० द्वि० २८३ अ ।

**अंवसालवणं**–आम्रशालवनं, आमलकल्पानगर्यां वनविशेष. । उत्त० १५९ । चैत्यविशेष । आव० ७०७ । आम्रशालवनम् । आव० ३१४ ।

**अंवा**–विद्याविशेष । आव० ४११ । जलम् । भग० ७७६ ।

**अंवाडगं**–अम्बालकम्, फलविशेष । अनुत्त० ६ । अवाटकं–फलविशेषः, अधोगतिमत् । प्रज्ञा० ३२८ ।

**अंवाडग**–बहुबीजको वृक्ष । भग० ८०३ । अवाडक–बहुबीजविशेष । प्रज्ञा० ३२ । आम्राटक –कापोतलेश्यारसे । प्रज्ञा० ३६४ ।

**अवाडगपलंवं**–फलविशेष । आचा० ३४८ ।

**अवाडगपाणगं**–पानकविशेष । आचा० ३४७ ।

**अंवाडिओ**–तिरस्कृत । बृ० प्र० ३०आ । तिरस्कृत । आव० ९१ । तर्जित । आव० १८७ । उपालब्ध । आव० ३९८ ।

**अंवाडिय**–निर्भर्त्सित । आव० ३०६ ।

**अंवाडिया**-तिरस्कृता । आव० २२५ ।

**अंवाडेइ**–तिरस्कुरते । उत्त० १४७ । उपलभते । आव० २२३ । नि० चू० प्र० २११ आ ।

**अंवाण**–गंधाम्रे, आम्रा । बृ० प्र० १४३आ ।

**अंवारेवई**–अम्बारेवती, व्यन्तरीविशेष । आव० ६९१ ।

**अंवावल्ली**–वल्लीविशेष । प्रज्ञा० ३२ ।

**अंवियपहारो**–प्रहारार्त्त. । आव० ६६६ ।

**अंविया**–प्राप्ता गवेषितलब्धा वा । बृ० द्वि० ८२अ ।

**अंविलं**–अम्लम् । आव० २०० । अम्लम्, तक्रारनालादि । दश० १८० । आचाम्लम्–अवश्यानम् । आचा० ३४६ ।

**अंविल**–पर्वगवनस्पति । भग० ८०२ । अम्बोऽम्लिकाद्याश्रित । जं० प्र० १७४ । हरितविशेष । प्रज्ञा० ३३ । रव्वा । बृ० प्र० २९अ ।

**अंविलजवागू**–अम्लयवागू । आव० ९१ ।

**अंविला**–आम्लिका । ओघ० २१५ ।

**अंविलि**–आम्लभाजनम्, चिञ्चिणिकापात्री । आव० ६२४ । रव्वा । बृ० प्र० २८आ ।

**अंविलिवीयं**–अम्लिकाबीजम्, चिञ्चिणिकाबीजम् । आव० ६२४ ।

**अंविलोदए**–आम्लोदकम्, अतीवस्वभावत एवाम्लपरिणामम् । जीवा० २५ । आम्लोदकम्, स्वभावत एवाम्लपरिणामं काञ्जिकवत् । प्रज्ञा० २८ ।

**अंबूखुज्जो**–आम्रकुब्जः । आव० ६४८ ।

**अंबे**–आम्ल । नि० चू० प्र० ३५६ आ । प्रथमपरमाधार्मिक । सम० २८ । अम्ब, नरके प्रथम. परमाधार्मिक. । आव० ६५० । पञ्चदशसु परमाधार्मिकेषु प्रथम । उत्त० ६१४ । अम्ब, प्रथम परमाधार्मिक । सूत्र० १२४ ।

**अंबेल्ली**– ( रव्वा ) । आव० ९१ ।

**अंबो**–आम्रवृक्ष, भावुके दृष्टात । ओघ० २२३ ।

**अंमिया**–प्राप्ता । नि० चू० द्वि० १० आ ।

**अंमेउं**–प्राप्तुम् । नि० चू० प्र० २०२ अ ।

**अंवाडेति**–खरंटेति । नि० चू० प्र० २११ आ ।

**अंस**–अस्रि, पर्यङ्कासनोपविष्टस्य जानुनोरन्तरं, आसनस्य ललाटोपरिभागस्य चान्तर, दक्षिणस्कन्धस्य वामजानुनश्चान्तरं, वामस्कन्धस्य दक्षिणजानुनश्चान्तरम् । चतुर्दिग्विभागोपलक्षित शरीरावयवो वा । भग० ११ । अस्रेषु–कोणेषु । जं० प्र० ११५ । अंश, सत्पर्यायोऽयं शब्द । उत्त० ५८९ ।

**असलग**–असगत । तं० ।

**अंसहरा**–अशधरा, अंश–प्रक्रमाज्जीवितव्यभागं धारयन्ति–मृत्युना नीयमानं रक्षन्ति । उत्त० ३८८ । अश – दुःखभागस्त हरन्ति अपनयन्ति ये ते । उत्त० ३८९ ।

**असातो**–एकस्मात् । ठाणा० २३६ ।

**अंसिया**–अविभक्तोऽंश । बृ० द्वि० १९९ आ । गामतृतियभागादि । नि० चू० द्वि० ७०आ । अंशिका–यत्र ग्रामस्यार्द्ध, आदिशब्दात् त्रिभागो वा चतुर्भागो वा गत्वा स्थित सा ग्रामस्यांश एव अंशिका । बृ० प्र० १८१ आ ।

**असियालए**–अस्यालये । दश० ३७ ।

**अंसी**–अस्रि, चतुर्दिग्विभागोपलक्षित शरीरावयव । जीवा० ४२ । प्रज्ञा० ४१२ । ( अर्शांसि ) रोगविशेष. । नि० चू० प्र० १८९ अ ।

**अप्पाहारो**–जो आयरिओ सकियसुत्तत्थो तं चेव पुच्छिउं वायणं देति, तारिसं ति मोत्तुं ण गंतव्वं । नि० चू० तृ० ९३ आ ।

**अप्पाहिंति**–सन्दिशन्ति । बृ० द्वि० ११४ आ । सन्दिशतः । आव० ३०२ ।

**अप्पाहिकरणे**–अल्पाधिकरणं–निष्कलहं । ठाणा० ४१६ ।

**अप्पाहितो**–सन्दिष्टः । उत्त० २१९ ।

**अप्पाहे**–तद्गुरोस्तत्प्रवर्तिन्या वा एवं सन्दिशति–यथैतामात्मसकाशे कुरुत । ओघ० ४३ ।

**अप्पाहेइ**–सन्दिशति । दश० १०३ ।

**अप्पाहेति**–सदिसइ । नि० चू० प्र० २११ आ ।

**अप्पाहेत्ता**–सन्दिश्य । उत्त० १७३ । आव० ३१० ।

**अप्पिच्छे**–अल्पेच्छ, अल्पा–स्तोका, अल्पशब्दस्याभाववादित्वेनाविद्यमाना वा इच्छा–वाञ्छा वा यस्येति । उत्त० १२४ । न्यूनोदरतयाऽऽहारपरित्यागी । दश० २३१ ।

**अप्पिणिच्चिया**–आत्मीया । आव० २०२ ।

**अप्पितणप्पिते**–अर्पित–विशेषित, अनर्पित–अविशेषितम् । ठाणा० ४८१ ।

**अप्पियं**–अर्पितम्, आहितम् । भग० ८९ ।

**अप्पियं**–अप्रियम्, अनिष्टम् । भग० ७२ । अर्पितः, विशेषः । विशे० १३४६ ।

**अप्पियणियं**–अप्रीतिकम्, कलहः । उत्त० ३५५ ।

**अप्पियत्ता**–अप्रियता, अप्रेमहेतुता । भग० २५३ । प्रज्ञा० ५०४ ।

**अप्पियवहा**–अप्रियवधा –अप्रियं–दुःखकारणम् तत् घ्नन्ति । आचा० १२२ ।

**अप्पुण्णकप्पिया**–अपूर्णकल्पिका–अन्योन्यस्य मुखदु खोपसपदं प्रतिपद्यंते । व्य० द्वि० ३७८ आ ।

**अप्पुत्थायी**–अल्पोत्थायी, अल्पमुत्थातुं शीलमस्येति । प्रयोजनेऽपि न पुन पुनरुत्थानशील. । उत्त० ५८ ।

**अप्पुस्सुए**–अल्पौत्सुक्य । भग० १७४ । त्वरारहित । भग० १२३ । अविमनस्क । आचा० ३७९ ।

**अप्पे**–आप्य, अपा प्रभव ह्रद । भग० १४१ ।

**अप्पो**–अल्प, सर्वथाऽविद्यमान । जीवा० १२१ । नास्ति किञ्चिदित्यर्थं । ओघ १७७ । निषद्याद्वयोपेतं रजोहरण मुखवस्त्रिका चोलपट्टकाश्च । बृ० प्र० १५० आ ।

**अप्पोदए**–अल्पोदके–भौमान्तरिक्षोदकरहिते । आचा० २८५ ।

**अप्पोलं**–दृढवेष्टनाद् घनवेष्टनात् । ओघ० २१४ ।

**अप्पोवही** – अल्पोपधि, अनुल्वणयुक्तस्तोकोपधि. । दश० २८० ।

**अप्पोसे** – अल्पावश्याये – अधस्तनोपरितनावश्यायविप्रुड्वर्जिते । आचा० २८५ ।

**अप्फंदणया** – भाण्डोचितहस्तपादादिचेष्टाविकलता । व्य० प्र० २३६ अ ।

**अप्फव्वितो**–अइक्कते । नि० चू० प्र० १४७ आ ।

**अप्फालिया**–शिक्षिता –उपालब्धा, उक्ता । आव० ५५७ ।

**अप्फालेइ** – आस्फालयति, हस्तेनाऽऽताडयति–उत्तेजयति । औप० ६४ ।

**अप्फिडिऊण**–आस्फाल्य । आव० ३४४ ।

**अप्फुण्णा**–व्याप्ता । बृ० तृ० ७० आ ।

**अप्फुण्णे**–आपूर्ण –परिपूर्णशरीर. । उत्त० ४८३ ।

**अप्फुण्णो**–व्याप्त । आव० ३५४ ।

**अप्फेया**–वल्लीविशेष । प्रज्ञा० ३२ ।

**अप्फोआ**–वनस्पतिविशेष । जं० प्र० ४६ ।

**अप्फोडेइ**–आस्फोटयति, करास्फोटं करोति । भग० १७५ ।

**अप्फोया**–वनस्पतिविशेष । जीवा० २०१ ।

**अप्फोव**–आस्तीर्णं, वृक्षगुच्छगुल्मलतासंछन्न । उत्त० ४३८ ।

**अप्रकीर्णप्रसृतं**–वाण्यतिशयविशेष । सम० ६३ ।

**अप्रतिहत**–( अप्पडिहय ) –कटकुट्यपर्वतादिभिरस्खलिते, अविसवादके वा । सम० ४ ।

**अप्रत्याख्यानम्**–द्वितियकषायचतुष्कम् । आचा० ९१ ।

**अप्रमार्जितचारित्वम्** – द्वितीयमसमाधिस्थानम् । प्रश्न० १४४ ।

**अप्रोषितः**–सामानिक, सन्निहित । विशे० १०६५ ।

**अप्सरा**–दक्षिणपश्चिमरतिकरपर्वतस्य दक्षिणस्या भूतावतंसिकाराजधान्यधिष्ठात्री, शक्रदेवेन्द्रस्य द्वितीयाग्रमहिषी । जीवा० ३६५ । शक्रस्याग्रमहिषी । जं० प्र० १५९ ।

**अफलवंतकी**–अफलवान्, अप्राप्तिक । प्रश्न० ६४ ।

**अफव्वंता**–अलभमाना । नि० चू० प्र० १८३ आ ।

**अफासुअ**–अप्रासुकम्, सचित्तसन्मिश्रादि । दश० २३१ । सचित्तम् । आचा० ३२१ ।

**अफासुए**-अप्रासुकम्, न प्रगता असव:-असुमन्तो यस्मात्तदप्रासुकम्-सजीवमित्यर्थ:। भग० २२६।

**अफुडिय**-अस्फुटित-राजीरहित। आव० २३९।

**अफुण्णे**-आपूर्णम्। प्रज्ञा० ५९२।

**अफुसं**-अस्पृश्यम्, अवन्धनीयम्। भग० १०४।

**अफुसमाणगतिपरिणामे**-अस्पृशद्गतिपरिणाम, अस्पृशतो गतिपरिणाम। प्रज्ञा० २८९।

**अफुसमाणगती**-अस्पृशद्गति:, यत्परमाण्वादिकमन्येन परमाण्वादिना सह परस्परसम्बन्धमननुभूय गच्छति सा, विहायोगतेर्द्वितीयो भेद। प्रज्ञा० ३२७।

**अबंधव**-अबान्धव, स्वजनरहित:। पश्न० १९।

**अबंधवो**-अबान्धव:, बान्धवरहित:, स्वजनसम्पाद्यकार्याभावात् कर्मनिगडबद्ध। प्रश्न० ११।

**अबंधिउं**-पात्रकबन्धग्रन्थिमदत्त्वा। ओघ० १४४।

**अबंभ**-अब्रह्म, अकुशलं कर्म, मैथुनम्। प्रश्न० ६५। अकुशलानुष्ठानम्, अब्रह्मग: प्रथम नाम। प्रश्न० ६६। मैथुनम्। आव० ६५३। बस्त्यनियमलक्षणं। आव० ७६१।

**अबंभ**-अब्रह्मवर्जक, श्रावकस्य षष्ठी प्रतिमा। आव० ६४६।

**अबंभचारिणो**-अब्रह्मचारिण, मैथुनं आसेवितु शील धर्मो वा येषा ते। उत्त० ३५८।

**अबद्धिआ**-अबद्धिका:, अबद्धं सत्कर्म कंचुकवत्पार्श्वत स्पृष्टमात्रं जीवं समनुगच्छन्तीत्येवं वदन्ति। औप० १०६।

**अबद्धिगा**-अबद्धिका, स्पृष्टकर्मविपाकप्ररूपका। आव० ३११। अबद्धिक, बद्धं-जीवप्रदेशैरन्योऽन्याविभागेन सम्पृक्त न बद्ध-अबद्ध, अर्थात्कर्म, तदभ्युपगमविषयमेषामस्तीति। उत्त० १५२।

**अबद्धिता**-अबद्धिका-स्पृष्टकर्मविपाकप्ररूपका। ठाणा०४१०।

**अबला**-अबला, शारीरशक्तिविकला। जं० प्र० २३९।

**अबले**-अबल, शरीरशक्तिवर्जित। भग० ३२३।

**अबहुस्सुए**-अल्पश्रुताय-अवगाढस्तोकशास्त्राय। सूर्य० १९६।

**अबहुस्सुतो**-जेग आयारपकप्पो ण ज्झातितो। नि० चू० तृ० २५ अ।

**अबहोड**-अबखोटक, बन्धविशेष। उत्त० ११३।

**अबाध**-अन्तरालम्। विशे० ३७६।

**अबाधाए**-अबाधया अपान्तराल। सूर्य० २६२।

**अबाले**-अष्टाधिकवर्ष। नि० चू० प्र० १७३ आ।

**अबाहा**-अबाधा, कर्मणो बन्धोदययोरन्तरम्। भग० २५५। अन्तरं, अन्तरालत्वाप्रतिघातरूपा। अव्यवधानेनान्तरम्। ज०प्र० ४३५। दूरवर्तित्वेनानाक्रमणमपान्तरालम्। ज० प्र० ६४। अन्तरं-व्यवधानम्। जं० प्र० ६५। अपान्तरालम्। जीवा० ९४, २०४। अन्तरालत्वाव्याघातरूपा। जीवा० ३०२। अन्तरालम्। ओघ० ९०। आव० ४६। विशे० ३७६। अन्तरं। जं० प्र० ४३५।

**अबाहाए**-अबाधया, व्यवधानेन कृत्वा। सम० २१। अबाधायां कृत्वा, अपान्तरालेषु मुक्त्वा। जीवा० २२२।

**अबाहिरा**-अबाह्य:, न बाह्य इति। आव० ४५।

**अबितिज्जओ**-अद्वितीय:, सहायो न भवति। प्रश्न० १२१।

**अबुद्धा अबुद्धजागरियं**-अबुद्धा:-केवलज्ञानाभावेन यथासम्भवं शेषज्ञानसद्भावाच्च बुद्धसदृशास्ते चाबुद्धानां-छद्मस्थज्ञानवतां या जागरिका। भग० ५५४।

**अबुहजण**-अबुधजन, अविपश्चिज्जन-परिजनो यस्य स:, अकल्याणमित्रपरिजन। दश० ८६।

**अबोट**-अनाक्रमणीय। ओघ० ९२।

**अबोहि**-अबोधि, मिथ्यात्वकार्यम्। आव० ७६२। मिथ्यात्वसंहति। दश० २४४।

**अबोहिअ**-अबोधिकम्, मिथ्यात्वफलम्। दश० २०५।

**अबोहिकलुसं**-अबोधिकलुष:, मिथ्यादृष्टि। दश० १५८।

**अब्बहुलकाण्डम्**-रत्नप्रभाया तृतीयकाण्ड। सम० ८८।

**अब्बुयं**-द्वितीयसप्ताहगर्भावस्था (त०)

**अब्भं**-अभ्रम्, सामान्याकारेण प्रतीतम्। जीवा० २८३।

**अब्भंगिपलुय**-स्नेहाभ्यक्तशरीर। ओघ० ७४।

**अब्भंगिओ**-अभ्यङ्गित। आव० ११७।

**अब्भंगेति**-येवेग अब्भंगर्ग। नि० चू० प्र० ११६ आ।

**अब्भंगो**-योवेण। नि० चू० प्र० १८८ अ।

**अब्भतरं**-लोकेऽन्यैरनुगतम्। दश० चू० १४।

**अब्भंतरकरणं**-द्वयो: साम्भो गच्छमेढीभूतयोरभ्यन्तरे कुलादिकार्यनिमित्त परस्परमुल्लपतोस्तृतीयस्योपशुश्रूपो बहिःकरण। व्य० प्र० २३८ अ।

**अब्भतरगो**-अभ्यन्तरम्-अभ्यन्त मध्ये भवं। ठाणा० ५५।

**अब्भंतरे पोग्गले**-भवधारणीयेनौदारिकेण वा शरीरेण ये क्षेत्रप्रदेशा अवगाढास्तेष्वेव ये वर्तन्ते तेऽवसेया:, विभूषापक्षे तु निष्ठीवनादयोऽभ्यंतरपुद्गला। ठाणा० १०५।

**अब्भक्खाणं**–अभ्याख्यानम्, परमभि असता दोषाणामाख्यानम्, अधर्मद्वारस्य सप्तदशं नाम। प्रश्न० २६। असदभियोग। सूत्र० २६२। असद्दूषणाभिधानम्। प्रश्न० ४१। असद्दोषारोपणम्। प्रज्ञा० ४३८। असतभावुद्भावणं। नि० चू० तृ० २५ अ। असद्दोषाविष्करणम्। भग० ८०।

**अब्भक्खाणे**–अभ्याख्यानम्, आभिमुख्येनाख्यानं–दोषाविष्करणम्। भग० २३२।

**अब्भडिओ**–आस्फालित, आहत। आव० ४३१।

**अब्भत्थं**–अध्यात्मस्थम्, अभिप्रेतम्। उत्त० २६५। यद्यस्याभिमतं सुखम्। उत्त० २६५। अध्यात्ममात्मनि यद्वर्तते, मन। उत्त० २६५। अध्यात्मकरणम्, क्रियाया अष्टमो भेद। आव० ६४८।

**अब्भत्थिए**–अध्यात्मिक, आत्मविषय। भग० ११५।

**अब्भत्थियं**–अभ्यर्थितम्। आव० ३५९।

**अब्भत्थे**–अभ्यस्ते, अनवरतं दृष्टपूर्वे, विकल्पिते, भाषिते च विषये पुन क्वचित् कदाचिदवलोकिते। विशे० १७५।

**अब्भपडलं**–अभ्रपटलम्, मेघवृन्दम्। औप० ६६। प्रज्ञा० २७। मणिभेदः, पृथिवीभेद। आचा० २९। उत्त० ६८९।

**अंब्भपडलो**–अभ्रपटल। प्रज्ञा० २६६। जीवा० २३।

**अब्भ(त)रया**–अभ्यन्तरका–ये राजानमति प्रत्यासन्नीभूयावलगन्ति। व्य० द्वि० २८२ अ।

**अब्भरहितो**–आसन्नो। नि० चू० द्वि० १३ आ।

**अब्भरुक्खो**–अभ्रवृक्ष, अभ्रात्मको वृक्ष। भग० १९५। वृक्षाकारपरिणतमभ्रम्। जीवा० २८३।

**अब्भरुह**–अभ्यारुह वृक्षस्योपरिवृक्ष, वनस्पतिविशेष। भग० ८०२।

**अब्भवालुए**–अभ्रवालुका, मणिभेद, पृथिवीभेद। आचा० २९।

**अब्भवालुया**–अभ्रवालुका, अभ्रपटलमिश्रा वालुका। प्रज्ञा० २७। उत्त० ६८९। जीवा० २३।

**अब्भसंथडा**–अभ्रसंस्थितानि, मेघैराकाशाच्छादनानीत्यर्थ। ठाणा० २८७।

**अब्भा**–अभ्राणि। भग० १९५।

**अब्भाइक्खइ**–अभ्याख्याति–निराकरोति। आचा० ५२।

**अब्भाइक्खिज्जा**–अभ्याख्यानम्–असदभियोग। आचा० ४४। प्रकटमसद्दोषारोपणम्। ठाणा० २६।

**अब्भावगासं**–अङ्गणम्। नि० चू० प्र० १९२ अ।

**अब्भावगासियं**–आकाशम्। बृ० द्वि० १७९ अ।

**अब्भासं**–पच्चासण्णं। नि० चू० प्र० ६० अ। अभ्यास–हेवाक। ठाणा० २८५।

**अब्भास**–अदूरसामर्थ्ये, अच्छेअव्वम्। दश० ३१।

**अब्भासकरणं**–जो धम्मच्चुओ तं पुणो धम्मे ठवेंतेण। नि० चू० प्र० २३८ अ।

**अब्भासगं**–अभ्यासकम्। ओघ० १५९।

**अब्भासवत्ति**–अभ्यासवर्त्ती–गुरोरभ्यासे–समीपे वर्तते इति शील, गुरुपादपीठिकाप्रत्यासन्नवर्ती। व्य० प्र० २० आ।

**अब्भासवत्तियं**–प्रत्यासत्तिवर्तित्वम्, श्रुतार्थिना हि आचार्यादिसमीपे आसितव्यम्। ठाणा० ४०९। अभ्यासो–गौरव्यस्य समीपं तत्र वर्तितुं शीलमस्येत्यभ्यासवर्ती तद्भावोऽभ्यासवर्त्तित्वं, अभ्यासे वा प्रीतिक–प्रेम। भग० ९२५।

**अब्भासवत्तिया**–अभ्यासवृत्तिता, समीपवर्त्तित्वम्। औप० ४३।

**अब्भासासन**–अभ्यासासनं–उपचरणीयस्यान्तिकेऽवस्थानं। सम० ९५।

**अब्भासिया**–द्रविडादिदेशोद्भवा। बृ० द्वि० २११ आ।

**अब्भासे**–अभ्यास, अदूरासन्नम्। दश० ३१। आसन्ने। ओघ० ७८। समीपे। ओघ० १४०।

**अब्भासो**–अभ्यास, आसेवनालक्षण। आव० ५९१।

**अब्भाहतो**–अभ्याहत, मत्त। उत्त० ३००।

**अब्भितरं**–आभ्यन्तरम्, प्रायश्चित्तादि। प्रश्न० १५७।

**अब्भितर**–अभ्यन्तरावधिरुक्त। विशे० ३६९। योऽवधिः सर्वासु दिक्षु स्वद्योत्य क्षेत्र प्रकाशयति। प्रज्ञा० ५३६। आभ्यंतर – चित्तनिरोधप्राधान्येन कर्मक्षपणहेतुस्तप। सम० १२।

**अब्भितरए**–अभ्यतरम् आन्तरस्यैव शरीरस्य तापनात्, सम्यग्दृष्टिभिरेव तपस्तया प्रतीयमानत्वाच्च। औप० ३७।

**अब्भितरओ तवो** – लौकिकैरनभिलक्ष्यत्वात्तन्त्रान्तरीयैश्च भावतोऽनासेव्यमानत्वान्मोक्षप्राप्त्यन्तरंगत्वाच्चाभ्यन्तरतप। दश० ३२। ठाणा ३६५।

**अब्भितरमलो**–आभ्यन्तरमल, मूत्रपुरीपादि। आव० ७५८।

**अब्भितरलावणग** – आभ्यन्तरलावणिक, लवणसमुद्रे शिखाया अर्वाक्चारी चन्द्र। जीवा० ३१८।

**अब्भिंतरसंवुका**–सखनाभिखेत्तोवमाए आगिइएं अतो आढवति वाहिरओ सणियट्टइ। उत्त० ६०५।

**अब्भिंतरिया**–अभ्यन्तरिका, नगरीविशेष। आव० २००।

**अब्भिंडिऊण**–आस्फाल्य। उत्त० १४९।

**अब्भुक्खेइ**–अभ्युक्षति, अभिमुख सिञ्चति। जीवा० २५६। अभ्युक्षति, सिञ्चति, स्नपयति। ज० प्र० १९२।

**अब्भुक्खेंति**–अभ्युक्षन्ति सिञ्चन्ति। ज० प्र० २७५।

**अब्भुग्गए**–अभ्युद्गत', आभिमुख्येन सर्वतो विनिर्गत। सूर्य० २६३।

**अब्भुग्गओ**–अभ्युद्गत, आभिमुख्येन सर्वतो गत.। जीवा० १७५। अभ्रोद्गत'–यद्वा आकाशे उद्गता प्रवलतया सर्वतस्तिर्यक् प्रसृता। ज० प्र० २९७।

**अब्भुग्गय**–अभ्युद्गतः, आभिमुख्येन सर्वतो विनिर्गत। प्रज्ञा० ९९। अभिमुखमुद्गत, अग्रिमभागे मनाक् उन्नत। जीवा० २०५। संजात। सम० १३९।

**अब्भुग्गयमूसिय**–अभ्युद्गतोच्छ्रित, अभ्युद्गतमभ्रोद्गतं वा यथाभवत्येवमुच्छ्रित, अथवा मकारस्यागमिकत्वादभ्युद्गतश्चासावुच्छ्रितश्चेत्यभ्युद्गतोच्छ्रित, अत्यर्थमुच्च इत्यर्थ। भग० १४५।

**अब्भुग्गया**–अभ्युद्गता, आभिमुख्येन सर्वतो विनिर्गता। जीवा० ३७९। अग्रिमभावे मनागुन्नता। ज० प्र० ५०। अभ्युद्गता, अतिरमणीयतया द्रष्टृणा प्रत्यभिमुखमुत्–प्रावल्येन स्थिता। जीवा० २२६।

**अब्भुग्गयाओ**–अभ्युद्गतान्यभ्रोद्गतानि वोच्चानि। भग० ६७२।

**अब्भुग्गयुच्छितपभासियं**–अभ्युद्गतोत्सृतप्रभासितं, अभ्युद्गता–आभिमुख्येन सर्वतो विनिर्गता उत्सृता–प्रवलतया सर्वासु दिक्षु प्रसृता या प्रभा तया सितम्। जीवा० ३७९।

**अब्भुज्जयं**–अब्भुज्जतमरणेण अब्भुज्जयविहारेण वा। नि० चू० तृ० ३५ अ।

**अब्भुज्जया**–अभ्युद्यता, सुविहिता। अनुत्त० ३।

**अब्भुज्जियविहारो**- जिणकप्पादि। नि० चू० प्र० २६३ आ।

**अब्भुट्ठाणं**–अभ्युत्थानम्, आगच्छति गच्छति च दृष्टे गुरावासनमोचनम्। उत्त० १७। ससम्भ्रममासनमोचनम्। उत्त० १२४। अभीलाभिमुख्येनोत्थानं-उद्यमनम्। उत्त०५३५। विनयार्हस्य दर्शनादेवासनत्यजन। ठाणा० ४०८। आसनत्याग। सम० ९५। गौरवार्हदर्शने विष्टरत्याग। भग० ६३७। जओ दीसइ तओ चेव कायव्वं। दश० ३०। आगतस्याभिमुखमुत्थानम्। दश० २४०।

**अब्भुट्ठिज्ज**–सिंहासनादभ्युत्तिष्ठेयुरिति। ठाणा० ११७।

**अब्भुट्ठिओ**–अब्भुट्ठिएत्ति सामाइयकडो पडिक्कंता व्रतारोपित। नि० चू० तृ० ८४ आ।

**अब्भुट्ठितो**–वैयावृत्त्यकरणोद्यतः। नि० चू० प्र० ३३४ अ।

**अब्भुट्ठित्तए**–अभ्युत्थातुम्–अभ्युपगन्तुम्। ठाणा० ५७।

**अब्भुट्ठियं**–अभ्युत्थितम्–अभ्युद्यतं। उत्त० ३०७। अभ्युत्थापन–वंदनकप्रतीच्छनकादिक। व्य० प्र० १७२ आ। अभ्युत्थित–उद्यत.। ओघ० १८०।

**अब्भुट्ठेमि**–अङ्गीकरोमि। भग० १२१।

**अब्भुत्तरोमा**–प्रदीप्तरोमा। नि० चू० द्वि० ६१ अ।

**अब्भुदए**–अद्भुतकान्, आश्चर्यरूपान्। उत्त० ३१७।

**अब्भुदओ**–उत्सवविशेष। बृ० द्वि० १९८० अ।

**अब्भुन्नय**–अभ्युन्नत', अभिमुखमुन्नत'। जीवा० २७५।

**अब्भुवगमिया**–आभ्युपगमिकी, या स्वयमभ्युपगम्य वेद्यते (वेदना)। भग० ४९७।

**अब्भुवगमे**–स्वेच्छया अभ्युपगम्य वादकथा क्रियते। बृ० प्र० ३१ आ।

**अब्भुवगमो**–अभ्युपगम', स्वयमङ्गीकार। प्रज्ञा० ५५७। भग० ६८३।

**अब्भे**–आभिन्द्यात्, आच्छिन्द्यात्। आचा० ३८।

**अब्भोवगमिया** – आभ्युपगमिकी–केशोल्लुञ्चनातापनादिभिः शरीरपीडा। प्रज्ञा० ५५७। शिरोलोचब्रह्मचर्यादिनामभ्युपगमे भवा (वेदना)। ठाणा० २४७।

**अब्रह्म**–मैथुनम्। आचा० ३३१।

**अभओ**–अभय। आव० ९५। अभयकुमारोऽग्रमकारी। अन्त० ९। व्यक्तिविशेष। आव० ३६८। उदाहरणदोषे अभयकुमार। दश० ५३। नामविशेष'। वृ० प्र० ४६ आ।

**अभओ सव्वस्सवि** – अभयं सर्वस्यापि प्राणिगणस्याभयम्। अहिंसाया द्विपञ्चाशत्तमं नाम। प्रश्न० ९९।

**अभक्तार्थः**–खमण', क्षपण'। व्य० प्र० १८१ आ।

**अभग्गं**–अभग्नम्, अपीडितम्। आव० ७७२।

**अभग्गजोगो**–अभग्नयोग। आव० ७९३।

**अभग्गसेण**-अभग्नसेन', विजयस्य चौरसेनापतेः स्कन्दश्रीभार्याया पुत्रः । विपा०- ५७। विजयस्य चौरसेनापते' पुत्र । विपा० ६० । अभग्नसेन, विपाकश्रुताध्ययनम् । ठाणा० ५०७।

**अभग्गो**-अभग्न, अभग्नसेन', विजयाभिधचौरसेनापतिपुत्रः, अन्तकृद्दशासु तृतीयाध्ययनम्। विपा० ३५।

**अभञ्जियं**-अभग्नाम्-अमर्दितामविराधिताम्।आचा० ३२३।

**अभडप्पवेसं**-अभटप्रवेशम्, कौटुम्बिकगेहेषु राजवर्णवता भटानामविद्यमानप्रवेशम्। विपा० ६३ ।

**अभत्तच्छंदो**-अभक्तच्छन्द, भक्तारुचिरूपः। उत्त० ७८।

**अभत्तट्ठं**-अभक्तार्थम्, उपवासः। आव० ८५२ ।

**अभत्तट्ठो**-अभक्तार्थ, न भक्तार्थ', उपवासः। आव० ८५३ ।

**अभय**-अभय, श्रेणिकपुत्रनाम। सूत्र० १०३ । दानविशेष । प्रश्न० १३५ ।अभय', संयमः । आचा० ६२। कुमारविशेष । नि० चू० प्र० ७ आ, नि० चू० तृ० ३७ अ। वृक्षाधिष्ठायकव्यंतरदर्शी । व्य० प्र० १७ अ ।

**अभयकरा**-मल्लिजिनदीक्षाशिबिका । सम० १५१ ।

**अभयकरो**-अभयकर' । आव० ४९९ ।

**अभयकुमारः**-प्रद्योतस्यापकारकः । सूत्र० ३१३-। विशेषनाम।विशे० ६१२। औत्पातिकीबुद्धेर्दृष्टांत.।बृ० प्र० १८६ अ। आर्द्रकुमाराय प्रतिमाप्रेषक. । सूत्र० ३८५। प्रद्योतगणिकाभिर्धार्मिकवञ्चनया वञ्चित । सूत्र० ३२९। कालसौकरिकसुतसुलससखा। सूत्र० १७८ ।भवद्पूर्विकैहिकार्थसिद्धौ दृष्टान्त । जं० प्र० १९७। रोहिणीयस्य लौकिकसूक्ष्मपरिनिर्वापणः। व्य० प्र० २०९ आ ।

**अभयकुमारो**-दृष्टांतविशेष. । नि० चू० प्र० १९४ अ।

**अभयदए** - अभयदय., प्राणापहरणरसिकेऽप्युपसर्गकारिणि प्राणिनि यो न भयं दयते ददाति, अभया सर्वप्राणिभयपरिहारवती वा दया-अनुकम्पा यस्य स । भग० ७। अभयं-विशिष्टमात्मन. स्वास्थ्यं नि श्रेयसधर्म्मभूमिकानिबन्धनभूता परमा धृतिरितिभाव. तदभय ददति। जीवा० २५५।

**अभयदयेणं**-अभयदय, न भयं दयते प्राणापहरणरसिकोपसर्गकारिण्यपि प्राणिनि ददातीत्यभयदय.। सम० ४। अभया वा-सर्वप्राणिभयपरिहारवती दया-घृणा यस्यासावभयदय'। सम० ४।

**अभयसेण**-अभयसेन', संवेगोदाहरणे वारत्रकपुरे राजा। आव० ७०९।

**अभयसेणो**-वारत्तपुरं नगर, तत्थ अभयसेणो राया। नि० चू० तृ० ५४ आ। वारत्रकपुरराजा। बृ० द्वि० २४९ आ।

**अभयसेन**-छर्दितदोषदृष्टान्ते राजा। पिंड० १६९।

**अभयसेना**-वापीनाम। जं० प्र० ३७०।

**अभया**-हरीतकी। आचा० १३०। नि० चू० द्वि० १४१ आ।

**अभये**-अभय', अनुत्तरोपपातिकदशानां प्रथमवर्गस्य दशमाध्ययनम्। अनुत्त० १।

**अभवसिद्धिय**-अभवसिद्धिकः, अभव्य'। जीवा० ४४९। ठाणा० ३०।

**अभविय**-अभव्य'-अयोग्य.। उत्त० ७१३।

**अभाग**-अभाग्य, अशोभनः। आव० ७०८।

**अभावं** - नञ कुत्सायामपि दर्शनादशोभनं भावं-सर्वतो निष्काशनलक्षणं पर्यायम्। उत्त० ४६।

**अभाविआ**-अगीतार्था । बृ० द्वि० १६६ आ।

**अभाविओ**-अभावित । आव० १०१। अभावित -अपरिणतजिनवचनस्तस्य निर्लेपनाभावे मा भूद् विपरिणाम'। बृ० प्र० २७२ अ।

**अभाविते**-असंसर्गप्राप्तं प्राप्तसंसर्गं वा। ठाणा० ४८१।

**अभावितो**-कृताभ्यास । नि० चू० तृ० १३१ आ।

**अभावुक**-नलस्तम्ब । ओघ २२३।

**अभावो**-असंभव.। दश० ३९। विनाश। बृ० द्वि० ७२ आ।

**अभासो**-स्वदेशभाषाया अज्ञ । बृ० द्वि० १९ आ।

**अभि**-पृथग्। बृ० द्वि० १९५ अ।

**अभिई**-अभिजित्, नक्षत्रविशेष। सूर्य० ११४। ठाणा० ७७।

**अभिओग**-अभियोग., आज्ञाप्रदानलक्षण'। दश० २४९। विकुर्वणा। भग० १९१। बलात्कार । उत्त० ३६५।

**अभिओगकया**-अभियोगकृता, या वशीकरणचूर्णमन्त्रयोः संयोजिता सा। ओघ० १९३।

**अभिओगपावणं** - अभियोगप्रापणं, हठाद्व्यापारवर्तनम्। प्रश्न० २२।

**अभिओगिओ**-आभियोगिक । आव० १२४।

**अभिओगे**-अभियोग', प्रेष्यकर्मणि व्यापार्यमाणत्वम्। जीवा० २४३।

**अभिओगो**-अभियोग, पारवश्यम्। विपा० ५४। गर्व। आव० ७७२। वशीकरणचूर्णो मन्त्रश्च। ओघ० १९३।

**अभिओग्गो**-अभियोग्य, अभिमुख कर्मसु युज्यते व्यापार्यत इति वा, तस्य भाव कर्म्म वा। जीवा० २८०।

**अभिकंख**-अभिकाङ्क्ष्य-उद्दिश्य। आचा० २८१। पर्यालोच्य। आचा० ३९८।

**अभिकंखमाणो**-अभिकाङ्क्षन्, मायारहित। दश० १५२।

**अभिकंता** - अभिकान्ता-शय्यायास्तृतीयप्रकार। बृ० प्र० ९३ अ।

**अभिक्कंतं**-अभिकान्तम्, अभिक्रमणम्। प्रज्ञापकं, प्रत्यभिमुख क्रमणम्। दश० १४१।

**अभिक्कमंति**-अभिलसति। दश० चू० ६२।

**अभिक्कममाणे**-अभिकामन्-गच्छन्। आचा० २१७।

**अभिक्खसेवा**-पुणो पुणो गमनं। नि० चू० प्र० ३९ आ।

**अभिक्खं**-अभिक्ष्णं-अनवरतं। आव० ११९।

**अभिक्खणं**-अभिक्ष्णं, अनवरतम्। भग० २२, ४१। आचा० ३६५। सूत्र० ११५। उत्त० ३४३, २१४। आव० ४०७। अनुसमयम्। भग० ४३। पुन पुन। उत्त० ३४४, ४२८, ठाणा० ३०१।

**अभिक्खणं अभिक्खण ओहारइत्ता** - शबलदोष। सम० ३७।

**अभिक्खणंऽभिक्खमोहारी**-अभीक्ष्णमभीक्ष्णमवधारक, योऽभीक्ष्णमवधारिणीं भाषा भाषते, यथा दासस्त्वं चौरो वेति, यद्वा शङ्कित तन्निःशङ्कित भणति। एकादशममसमाधिस्थानम्। आव० ६५३, ६५४।

**अभिगच्छंति**-अभिगच्छन्ति, समीपमभिगच्छन्ति। भग० १३७।

**अभिगता**-अभिगता, अभिगतजीवाजीवा। आव० ३०४।

**अभिगम**-अभिगम, ज्ञानम्। उत्त० ५९२। बोधिलाभ। सम० १२०। मैथुनासेवना, गमनं च। आव० ८२५। अभिगम्य, विज्ञाय, आसेव्य। दश० २५८।

**अभिगमकुसले**-अभिगमकुशल, लोकप्राघूर्णकादिप्रतिपत्तिदक्ष। दश० २५५।

**अभिगमणं** - अभिगमनं, सर्वगाद्यान्मण्डलादभ्यन्तरप्रवेशनम्। जीवा० ३४५। सूर्य० २४३।

**अभिगमरुई** - अभिगमरुचि -यस्य श्रुतज्ञानमर्थतो दृष्टं स भवति। प्रज्ञा० ५६। अभिगमो-ज्ञानं ततो रुचिर्यस्य स, येन ह्याचारादिक श्रुतमर्थतोऽधिगत भवति स.। ठाणा० ५०४। अभिगमरुचि -अभिगमो-ज्ञान तेन रुचिर्यस्य स। उत्त० ५६३।

**अभिगमसड्ढे**-अभिगमश्राद्धक -यत्र कारणे आपन्ने प्रविश्यते। ओघ० १५६।

**अभिगमसड्ढो**-सम्मद्दिट्ठी-गिहीताणुव्वओ। नि० चू० प्र० १९९ आ।

**अभिगम** - अभिगम, विस्तरबोध। भग० १००। प्रतिपत्ति। भग० १३७।

**अभिगमो**- अधिगम, यथावस्थितपदार्थपरिच्छेद। आव० ८३८। साधूणमागयाणं जा विणयपडिवत्ती सा। दश० चू० १४१।

**अभिगया**-जीवाजीवादिपदार्थाभिगमोपेता श्राविकेत्यर्थ। बृ० तृ० १३९ आ।

**अभिगहियट्ठ** - अभिगृहीतार्थम्, प्रश्नितार्थस्याभिगमनात्। भग० १३५।

**अभिगाहइ**-सेवते। आचा० ११४। अभिगाहन्ते-सेवन्ते। आचा० १३३।

**अभिगिज्झ**-अभिगृह्य, आलोच्य। दश० २१६। अङ्गीकृत्य, तदभिमुखीभूय। ठाणा० ५६।

**अभिग्गह**-अभिग्रह, गुरुवियोगकरणाभिसन्धि। दश० २४१।

**अभिग्गहियमिच्छादंसणवत्तिया** - अभिगृहीतमिथ्यादर्शनप्रत्ययिकी, मिथ्यादर्शनप्रत्ययिकीक्रियाया द्वितीयोभेद। आव० ६१२।

**अभिग्गहिया**-अभिगृहीता, प्रतिनियतार्थावधारणम्। प्रज्ञा० २५६। अभिग्रहिका-वस्त्राणि वा पात्राणि वा पूरणीयानि अपरेण वा येन प्रयोजनमिति प्रतिपन्नाभिग्रहा। बृ० प्र० ९९ आ।

**अभिग्गहो**-अभिग्रह -प्रत्याख्यानविशेष। आव० ८५२। कुमतपरिग्रह। ठाणा० ४९। नियम। भग० ६२।

**अभिग्रहिक** -मिथ्यात्वविशेष। ठाणा० २७।

**अभिघट्टिज्जमाणस्स**-अभिघट्ट्यमानस्य-वेगेन गच्छत। जं० प्र० ३७। जीवा १९३।

**अभिघातो**–उवलओ वा घत्तिजाति। नि० चू० प्र० १०५ आ।

**अभिचंदे**–अस्यामवसर्प्पिण्या चतुर्थकुलकरः। सम० १०३, १५०। अभिचन्द्रः, अन्तकृद्दशानां द्वितीयवर्गस्याष्टमाध्ययनम्। अन्त० ३। अभिचन्द्र –मुहूर्त्तविशेषः। सूर्य० १४६। जं० प्र० ४९१। कुलकरविशेषः। आव० १११। जं० प्र० १३२। अभिचन्द्र –अमुष्यामवसर्प्पिण्या चतुर्थकुलकरः। ठाणा० ३६८।

**अभिचारकमन्त्रविद्यादि** – अशिवपुररोधादौ तत्प्रशमनार्थं। ठाणा० १६४।

**अभिचारुअं**–चारकता। नि० चू० प्र० २७४ आ।

**अभिचारुकं**–वसीकरणं। नि० चू० प्र० १०१ आ।

**अभिजाए**–अभिजात, शास्त्रीयद्वादशदिवसनाम। जं० प्र० ४९०। विनीतः। उत्त० १८८। कुलीन। जं० प्र० १८२।

**अभिजाओ**–शिष्टः। बृ० द्वि० २५५ आ।

**अभिजाणइ**–अभिजानाति, विवेचयति। आचा० २०३।

**अभिजातं**–वाण्यतिशयविशेष। सम० ६३।

**अभिजाति**–कुलीनता। उत्त० ३४७।

**अभिजातिए** – अभिजातिगः, अभिजातिः–कुलीनता ता गच्छति–उत्क्षिप्तभारनिर्वाहणादिनेति। उत्त० ३४७।

**अभिजाते**–अभिजात., शास्त्रीयैकादशदिवसनाम। सूर्य० १४७।

**अभिजाय**–अभिजातम्–कुलीनम्। भग० ४६९।

**अभिजायइ** – अभिजायते, उपभोग्यतयाऽऽभिमुख्येनोत्पद्यते। उत्त० १८७।

**अभिजित्**–नक्षत्रदेवविशेष। प्रश्न० ९५। उदायनपुत्र। ठाणा० ४३१।

**अभिजुंजंति**–अभियुञ्जते, योजयन्ति। प्रश्न० ३६।

**अभिजुंजित्तए** – अभियोक्तुम्, विद्यादिसामर्थ्यतस्तदनुप्रवेशेन व्यापारयितुम्। भग० १९१।

**अभिजुंजिया**–अभियुज्य, व्यापार्य, स्मारयित्वा। सूत्र० १३९। योजयित्वा, अभियोगं ग्राहयित्वा, व्यापारयित्वा। आचा० १२३। आश्लिष्य–वशीकृत्य। ठाणा० १०६। सम्बन्धमुपगत्य, प्रतिस्पर्द्धय। ठाणा० १७७।

**अभिजोइंति** – तिरस्कुर्वन्ति, निर्भर्त्सयन्ति। बृ० प्र० २८१ अ।

**अभिजोयंति**–वशीकुर्वन्ति। बृ० द्वि० २५५ अ।

**अभिज्जं**–अमेद्य। उत्त० २०७।

**अभिज्जा** – अभिध्यानमभिध्येत्यस्य। सम० ७१। लोभः, अभिध्यानं वा। प्रश्न० ९७।

**अभिज्झा**–अभिध्या–अदृढाभिनिवेश, चित्तलक्षणः। भग० ५७३। अभिध्या, अभिध्यानम्, अभिलाषः। प्रज्ञा० ५०४।

**अभिज्झिअ**–अभिध्यातम्, इष्टम्। दश० २७७।

**अभिज्झियत्ता**–अभिध्यितता, भिध्या–लोभः सा सञ्जाता यत्र सो भिध्यितो, न भिध्यितोऽभिध्यितस्तद्भावस्तत्ता। भग० २५३। अभिध्यितता, अभिध्यानमभिध्या–अभिलाषः, सा सञ्जाताऽस्मिन् तस्य भावः। प्रज्ञा० ५०४। अभिध्येयता–अहृद्यत्वं, अशुभत्वं। भग० २३।

**अभिणए**–अभिनय, चतुर्भिराङ्गिकवाचिकसात्विकाहार्यभेदैः समुदितैरसमुदितैर्वाऽभिनेतव्यवस्तुभावप्रकटनम्। जं० प्र० ४१४।

**अभिणंदणो** – अभिनन्दन, अभिनन्द्यते देवेन्द्रादिभिरिति, चतुर्थजिन, गर्भात्प्रभृतिरभीक्ष्णं शक्रोऽभिनन्दितवानिति। आव० ५०२।

**अभिणंदिए**–अभिनन्दित.–लोकोत्तरप्रथममासनाम। जं० प्र० ४९०।

**अभिणदियाइओ**–अभिनन्दितवान्। आव० ५०२।

**अभिणंदे**–अभिनन्द, लोकोत्तरप्रथममासनाम। सूर्य० १५३।

**अभिणिक्खंतो**–अभिनिष्क्रान्तः। आव० ११७।

**अभिणिबोहे**–अभिनिबोध., अर्थाभिमुखो नियतः प्रतिनियतस्वरूपो बोधो–बोधविशेषः, अभिबुध्यतेऽस्माद् अस्मिन् वेति। तदावरणकर्मक्षयोपशमः। प्रज्ञा० ५२६।

**अभिणिवट्टमाणे** – अभिनिवर्त्तमान, पृथग्भवन। सूत्र० ३५४।

**अभिणिविट्ठं** – अभिनिविष्टं, विशिष्टविशिष्टतराध्यवसायभावतोऽतितीव्रानुभावजनकतया व्यवस्थितम्। प्रज्ञा० ४०३।

**अभिणिवेसे**–अभिनिवेशः, चित्तावष्टम्भ। औप० १०६।

**अभिणिव्वट्टित्ता**–अभिनिर्वर्त्य, समाकृष्य। सूत्र० २७९।

**अभिणाणं** – अभिज्ञानं, चिह्नम्। उत्त० १४९। आव० ३४४।

**अभिण्णाय**–अभिज्ञातम्, अभिमतम्। भग० १९७।

**अभितावयंति**–अभितापयन्ति, अपनयन्ति । सूत्र० १३३ ।
**अभितुर**–अभि–आभिमुख्येन त्वरस्व-शीघ्रो भव । उत्त० ३४० ।
**अभितोसइज्जा**–अभितोषयति, येन वा तेन वा यापयति । दश० २५३ ।
**अभिदुग्गा**–अभिदुर्गा, आभिमुख्येन दुर्गा–दु खोत्पादिका । सूत्र० १२९ ।
**अभिद्दवं**–अभिद्रवन्ति । आचा० ४२९ ।
**अभिद्दुय**–अभिद्रुतः, सर्वात्मना व्याप्त. । जीवा० १३० ।
**अभिधानं**–वचनपर्याय । आव० २९ ।
**अभिधारए**–अभिधारयेत्–यायात् । दश० १८६ । किमेते उपसर्गा ममाचलितचेतस. कर्त्तुमलमिति चिन्तयेत् । उत्त० १०९ । अभिधारयेयु.–अन्तर्भावितेव । उत्त० १०९ ।
**अभिधारणा** – धारणा, विचारणा, सकल्पः । व्य० द्वि० ३७३ आ ।
**अभिधारयामो**–गर्हणाबुद्धयोद्‌घट्टयामः । सूत्र० ३९२ ।
**अभिधारेमाणे**–अभिसन्धारयतः–गच्छत । आचा० ३२९ ।
**अभिधास्ये**–कीर्त्तयिष्ये । आचा० ४ ।
**अभिनंदिज्जा**–अभिनन्देत्, अनुमन्येत । उत्त० १२० ।
**अभिनयिका**–नृत्यकलाभेद । सम० ८४ ।
**अभिनव**–विशिष्टवर्णादिगुणोपेत । जीवा० १२१ ।
**अभिनवम्**–नवम् । सूर्य० १८ ।
**अभिनिक्खमणं**–अभिनिष्क्रमण-दीक्षा । आचा० ४२२ ।
**अभिनिक्खमति**–अभिनिष्क्रामति–धर्माभिमुख्येन गृहस्थ-पर्यायान्निर्गच्छति । उत्त० ३०६ ।
**अभिनिचरिका**–आभिमुख्येन नियता चरिका सूत्रोपदेशेन वहिर्व्रजिकादिषु दुर्बलानामाप्यायनिमित्तं पूर्वाह्निकाले समुत्कृष्ट समुदान लब्धु गमनं । व्य० द्वि० ६९ अ ।
**अभिनिदुवारं**–अनेकद्वारम् । बृ० द्वि० १२ आ ।
**अभिनिबोध**-अर्थाभिमुखोऽविपर्ययरूपत्वान्नियतोऽसशयरूपत्वाद् वोध –संवेदनम् । ठाणा० ३४७ ।
**अभिनिपयाए**–अभिनिप्रजा–अभि–प्रत्येकं नियता–विविक्ता प्रजा चुल्ली । व्य० द्वि० ३३९ अ ।
**अभिनिवर्त्तनम्**–क्रिया । उत्त० ५८१ ।
**अभिनिविट्टा**–अभिनिर्वृत्ता । आव० २२७ ।
**अभिनिविट्ठं**–अभिनिविष्टम् । तीव्रानुभावतया निविष्टम् । भग० ९० ।
**अभिनिविट्ठाइं**–अभि–अभिविधिना निविष्टानि–सर्वाण्यपि जीवे लग्नानि । भग० ५६९ ।
**अभिनिवुडच्चे**–अभिनिर्वृत्तार्च–शरीरसंतापरहित । आचा० २८८ ।
**अभिनिवेशिक** –मिथ्यात्वविशेष । ठाणा० २७ ।
**अभिनिवेसए**–अभिनिवेशयेत्, कुर्यात । दश० २३२ ।
**अभिनिवेसं**–अभिनिवेश । आव० ३११ । आग्रह । भग० ४८९ ।
**अभिनिव्वट्टित्ता**–अभिनिर्वर्त्त्य, विधाय । भग० २२४ ।
**अभिनिव्विगड**–विष्वक् अपवरक. । व्य० द्वि० १९० आ ।
**अभिनिव्वगडा**–अभिनिर्व्याकृत-पृथग्विभिन्नद्वाराया वसतौ । व्य० प्र० ४० आ ।
**अभिनिव्वगडाए**–अभि–प्रत्येकं नियतो वगडः–परिक्षेपो यस्या सा अभिनिव्वगडा । व्य० द्वि० १८१ अ ।
**अभिनिसिज्जा**–अभिनिषद्या–रात्रिस्वाध्यायभूमि , अभिनैषेधिकी–सामान्यस्वाध्यायभूमि । व्य० प्र० १२७ अ ।
**अभिनिसिट्ठो** – अभिनिसृष्ट, अभिमुखं – बहिर्भागाभिमुख निसृष्ट । जीवा० ३६१, २०६ ।
**अभिनिस्सवति**–अभिनि श्रवति, जिघ्रतामभिमुखं निस्सरति । जीवा० १९२ ।
**अभिन्नं**–अव्यपगतजीवं । बृ० प्र० ३५ आ ।
**अभिन्नाय**–अभिधाय–ज्ञात्वा । आचा० ३०४ ।
**अभिप्पाओ**–अभिप्राय , बुद्धिः । आव० ४१४ ।
**अभिप्पेय**–अभिप्रेत , कामयन् । दश० १९५ । अभिप्रेतें–अभिरुचिते । उत्त० २५४ ।
**अभिभवे**–अभिभवकायोत्सर्ग – उपसर्गाभियोजने द्वितीय । आव० ७७१ । विशे० ६१२ ।
**अभिभूत** –आकुल. । आव० ५८९ । प्रारब्ध., अपराद्धो वा । प्रश्न० ६० ।
**अभिभूय**–तिरस्कृत्य । आचा० ३०८ । सर्वथा तत्सामर्थ्यमुपहत्य । उत्त० ८१ । पराजित्य । सूत्र० १४५ । अभिव्याप्य । सूत्र० २८५ ।
**अभिमरए**–अभिमरक । आव० ८१९ ।
**अभिमरा**–अभिमरा । उत्त० १६२ । आव० ३१६ ।
**अभिमुखं**–अभिमुख । व्य० प्र० ९९ अ ।

**अभिमुखनामगोत्रः** – (अभिमुहनामगोत्तं), नोआगमतो द्रव्यद्रुमस्य तृतीय. प्रकारः। दश० १७। अभिमुखे–संमुखे जघन्योत्कर्षाभ्यां समयान्तर्मुहूर्त्तानन्तरभावितया नामगोत्रे इन्द्रसम्बन्धिनी यस्य स तथा। ठाणा० १०३।

**अभिमुखनामगोत्रा** – ये पुनर्वादरापर्याप्ततेज कायिकायुर्नामगोत्राणि पूर्वभवमोचनानन्तरं साक्षाद्वेदयन्ते तेऽभिमुखनामगोत्राः। प्रज्ञा० ७६।

**अभिमुह**–पव्वज्जाभिमुहो, संपट्ठितो। नि० चू० प्र० १०४ अ।

**अभिमुहो**–अभिमुख, उद्युक्तः। दश० २४५। अभि–भगवन्तं प्रति मुखमस्य। सूर्य० ६।

**अभियोग**–आज्ञा। ठाणा० ५२१। ग्रहणप्रवण, अर्थवलाऽऽयातत्वेन तन्नान्तरीयकोद्भव। विशे० ५३। कार्मणं कुर्यात्। वृ० प्र० ९९ आ।

**अभियोग**–आभियोग्यः, अभियोगार्ह आदेशकारी देव.। प्रश्न० १२१।

**अभियोगो**–वशीकरण। व्य० द्वि० ३१५ आ।

**अभियोजनम्** – विद्यामन्त्रादिभि परेषां वशीकरणादि। प्रज्ञा० ४०६।

**अभिरई**–अभिरति, आभिमुख्येन रति। आव० ४५१।

**अभिरामयंति**–अभिरमयन्ति, आभिमुख्येन विनयादिषु युञ्जते। दश० २५६।

**अभिरू**–मध्यमग्रामस्य सप्तममूर्छनानाम। ठाणा० ३९३।

**अभिरूइए**–स्वादुभावमिवोपगतः। भग० ४६७।

**अभिरूप**–अभिमुखमतीवोक्तरूपं आकारो यस्य सः। सूर्य० २।

**अभिरूवं**–अभिरूपं, अभि–सर्वेषां द्रष्टृणां मन.प्रसादानुकूलतयाऽभिमुखं रूपं यस्य तत्, अत्यन्तकमनीयमिति। जीवा० १६१। प्रज्ञा० ८७।

**अभिरूवा**–अभिरूपाणि, कमनीयानि। सम० १३८। अभि–सर्वेषां द्रष्टॄणां मन.प्रसादानुकूलतया अभिमुख रूपं यस्यः सा, अत्यन्तकमनीया। जं० प्र० २१। अभिरूपा –कमनीया.। ठाणा० २३२।

**अभिलंघमाण**–अभिलङ्घयत्, अनुलिखत्। जं० प्र० २९७।

**अभिलसंति**–अभिलषन्ति। औप० २४।

**अभिलसइ**–अभिलषति,अभिलषणं-तल्लालसतया वाञ्छनम्। उत्त० ५८७।

**अभिलावपुरिसे** – अभिलापपुरुष. पुंल्लिङ्गाभिधानमात्रम्। आव० २७७। ठाणा० ११३।

**अभिलाषः**–तीव्रलोभोदयप्रभव आत्मपरिणामः। आव० ५८०।

**अभिलोयणं**–अभिलोकनम्, अभिलोक्यते यत्रस्थैस्तत्, उन्नतस्थानम्। प्रश्न० १३८।

**अभिवंदओ**–अभिवन्दकं, अभिवन्दिष्यत इति। आव० १६७।

**अभिवंदिऊण**–अभिवन्द्य, अभिमुख वन्दित्वा–प्रणम्य। प्रज्ञा० ३।

**अभिवड्डिए**–अभिवर्द्धितः, तृतीयः पञ्चमश्च युगे सवत्सरौ। सूर्य० १५४। ठाणा० ३४४।

**अभिवड्डिए णं मासे**–अभिवर्द्धितसंवत्सरस्य चतुश्चत्वारिंशद्‌होरात्रद्विषष्टिभागाधिकत्र्यशीत्यधिकशतत्रयरूपस्य द्वादशो भाग। सम० ५६। अभिवर्द्धितमास, अभिवर्द्धितो नाम मुख्यतस्त्रयोदशचन्द्रमासप्रमाणसवत्सर। वृ० प्र० १८६ आ।

**अभिवड्डियवरिसं**–जत्थ अधिकमासगो पडिति वरिसे तं। नि० चू० प्र० ३३९ अ।

**अभिवड्डियसंवच्छरे**–अभिवर्द्धितसवत्सर। सूर्य० १६९, १७१।

**अभिभवंति**–अभिभवन्ति–न्यक्कुर्वन्ति। ठाणा० १७७।

**अभिवद्धी**–अभिवृद्धि, उत्तराभाद्रपदाया देवता। जं० प्र० ४९९।

**अभिवयणा**–'अभी'त्यभिधायकानि वचनानि–शब्दा अभिवचनानि, पर्यायशब्दा। भग० ७७६।

**अभिवादणं** – अभिवादनम्, शिरोनमनचरणस्पर्शनादिपूर्वमभिवादये इत्यादि वचनम्। उत्त० १२४।

**अभिवायण**-अभिवादनं-नमोक्काराइकरणं। दश० चू० १६३।

**अभिवाहारो** – अभिव्याहार, आचार्यशिष्ययोर्वचनप्रतिवचनेऽभिव्याहरणम्। आव० ४७१।

**अभिविधग्गहणं**–पर्यापन्नपरिष्ठापितादेर्ग्रहणम्। वृ० द्वि० २४ अ।

**अभिवुड्डित्ता**–अभिवर्ध्य। सूर्य० १२।

**अभिवुड्डेमाणे**–अभिवर्द्धयन्। सूर्य० १२।

**अभिव्यज्यते**–अनन्तपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारणसन्निधाने तत्तद्रूपम्। ठाणा० ४९०।

**अभिशंसनम्** – असदध्यारोपणं, अभ्याख्यानं च । आव० ८२१ ।

**अभिसंधारिज्जा**–अभिसन्धारयेत्, पर्यालोचयेत् । आचा० ३२९ ।

**अभिसन्धि**–आलोचनम् । प्रज्ञा० ५०० ।

**अभिसंभूया**–अभिसम्भूता, प्रादुर्भूता । आचा० ३७६ ।

**अभिसमण्णागए**–तद्भोगापेक्षया । भग० १५९ । गवेषयता लब्ध । भग० २२८ ।

**अभिसमन्नागच्छामि** – अभिसमागच्छामि, अभिविधिना साङ्गत्येन चावगच्छामि–सर्वैं परिच्छित्तिप्रकारैं परिच्छिनद्मि । भग० ७२५ ।

**अभिसमन्नागयं** – परिणमयितुमारब्धम् । भग० २२४ । उदयाभिमुखीभूतम् । भग० ९० । अभिसमन्वागतम्–उदयाभिमुखीभूतम् । प्रज्ञा० ४०३ । विशेषत परिच्छिन्नम् । भग० २२३ ।

**अभिसमन्नागया**–अभिसमन्वागता', अभि'–आभिमुख्येन सम्यग्–इष्टानिष्टावधारणतयाऽन्विति–शब्दादिस्वरूपावगमात्पश्चादागता' ज्ञाता –परिच्छिन्ना यस्य । आचा० १५३ । भोग्यावस्था गता । ठाणा० २४५ ।

**अभिसमन्नागयाइं**–अभिविधिना सर्वाणीत्यर्थ समन्वागतानि–सम्प्राप्तानि । भग० ५६९ ।

**अभिसमागच्छति**–अभिसमागच्छति, साध्यसिद्धौ व्यापारणत सम्यक् प्राप्नोति । भग० २३९ ।

**अभिसमागम** – अभिसमागम, वस्तुपरिच्छेद । ठाणा० १७२ ।

**अभिसमेच्चा** – आभिमुख्येन सम्यगित्वा–ज्ञात्वा । आचा० ४४ ।

**अभिसित्त**–अभिषिक्त, दीक्षासस्कृत । दश० २४५ ।

**अभिसेअ**–अभिषेक, श्रियोऽभिषेक । आव० १७८ ।

**अभिसेअसिला** – अभिषेकशिला, अभिषेकाय–जिनजन्मस्नात्राय शिला । ज० प्र० ३७१ ।

**अभिसेआ**–पवत्तिणी । नि० चू० प्र० १३२ आ ।

**अभिसेए**–आचार्यपदस्थापनार्ह', सूत्रार्थतदुभयोपेत । बृ० द्वि० २८३ आ ।

**अभिसेएण**–अभिषेकेण,शुक्रशोणितनिषेकादिक्रमेणेति। आचा० २३९ ।

**अभिसेओ**–अभिषेक –सूत्रार्थतदुभयोपेत आचार्यपदस्थापनार्ह । व्य० प्र० १४१ आ । जीवा० २७६ ।

**अभिसेक्कभंडे**–अभिषेकभाण्डम्, अभिषेकोपस्करः । जीवा० २३६ ।

**अभिसेग**–अभिषेक, अभिषिक्त' । बृ० प्र० १७७ आ ।

**अभिसेगपत्ता** – अभिषेकप्राप्ता–प्रवर्त्तिनीपदयोग्या । बृ० द्वि० २२ आ ।

**अभिसेगसिलाओ** – अभिषेकशिला', तीर्थकराणामभिषेकार्था शिला । ठाणा० २२५ ।

**अभिसेज्जं**–अभिशय्या, अभिनिषद्या । व्य० प्र० १२८ अ ।

**अभिसेज्जा**–अभिशय्या, द्वितीयवसति । विशे० १३०९ ।

**अभिसेय**–अभिषेक –उपाध्याय । व्य० द्वि० १६५ अ ।

**अभिसेयसभा**–अभिषेकसभा । जीवा० २३६ ।

**अभिसेयसभा**–अभिषेकसभा, यस्या राज्याभिषेकेणाभिषिच्यते । ठाणा० ३५२ । अभिषेकभवन विमानभाविनी सभा । प्रश्न० १३५ ।

**अभिहआ**–अभिहता, अभिमुखेन हता, चरणेन घट्टिता, उत्क्षिप्य क्षिप्ता वा । आव० ५७३ ।

**अभिहड** – अभ्याहृतम्, स्वग्रामादे साधुनिमित्तमभिमुखमानीतम् । दश० ११६ । गृहस्थेनानीतं । आचा० ३२५ । निष्पन्नमेवान्यत समानीतम् । आचा० ३६१ । अभ्याहृतं–स्वग्रामादिभ्य आहृत्य यद्ददाति । ठाणा० ४६० । भग० ४६७ ।

**अभिहणंति** – अभिघ्नन्ति, अभिमुखमागच्छन्तो घ्नन्ति । प्रज्ञा० ५९२ ।

**अभिहणह**–आभिमुख्येन हथ । भग० ३८१ ।

**अभिहणिज्ज** – अभिहन्यात, पादेन ताडयेत् । आचा० ४२८ ।

**अभीक्ष्णमवधारकत्वम्**–शङ्कितस्याप्यर्थस्यावधारकत्वम् । प्रश्न० १४४ ।

**अभीति**–अभिचि, उदायननृपपुत्र । भग० ६१८ ।

**अभीयी**–अभिजित्, नक्षत्रविशेष । सूर्य० १२९ ।

**अभीरू**–सत्त्वसम्पन्न । ओघ० २०२ ।

**अभु(ब्भु)ज्जियमरणं**–परिण्णादि । नि० चू० प्र० २६३ आ ।

**अभुत्त**–अभुक्त, य कुमार एव प्रव्रजित । ओघ० ९१

**अभूइभाव**–अभूतिभाव, असम्पद्भाव । दश० २४३ ।

**अभूएणं**-अभूतेन, असद्भुतेन। सम० ५२।
**अभूतोद्भावनम्**-यथा सर्वगत आत्मा। ठाणा० २६।
**अभूतिभावो**-विणासभावो। दश० चू० १३१।
**अभेज्ज**-अभिध्या, रौद्रध्यानम्। प्रश्न० ४२।
**अभेज्झलोभो** – अभिध्यालोभः, रौद्रध्यानान्विता मूर्च्छा। प्रश्न० ४२।
**अभेत्सुः**-कणिकाकार कुर्युः। आचा० ३४३।
**अभ्यंतरं तप**-सवरनिर्जराद्वारा निर्वाणप्रापकं। तत्त्वा० ९-४६।
**अभ्यन्तरशम्बूका** – यस्यां क्षेत्रमध्यभागाच्छङ्खवद्वृत्तया परिभ्रमणभङ्गया भिक्षा गृह्णन् क्षेत्रबहिर्भागमागच्छति। बृ० प्र० २५७ अ।
**अभ्यन्तरान्**-अवगाहक्षेत्रस्थान्। ठाणा० २८४।
**अभ्यन्तरानिर्वृति**-बाह्यनिर्वृते खड्गधारासमानाया स्वच्छतरपुद्गलसमूहात्मिका। प्रज्ञा० २९४।
**अभ्यस्तः**-जित उचितो वा। आव० ५९४।
**अभ्यस्तम्**-कृतं, निर्वर्त्तितम्। आव० ५९३।
**अभ्यागत**-अतिथिः। उत्त० ३८१।
**अभ्यासगुणे**-( अब्भासगुणे ), भोजनादिविषय। आचा० ८६।
**अभ्यासराशि**-गुणकार। सम० ९१।
**अभ्युद्यतविहारेण**-जिनकल्पादिना। बृ० प्र० २१० आ।
**अमंडलिउवजीवो**-अमण्डल्युपजीवकः-तत्र योऽमण्डल्युपजीवकः स साधुर्गुरुसगासं गत्वा तमेव गुरुं भणति-यथा हे आचार्या! सदिशत-ददत यूयमिदं भोजनं प्राघूर्णक-क्षपक-अतरन्तबालवृद्धशिक्षकेभ्य -साधुभ्य इति। ओघ० १७८।
**अमंथरम्**-अविलम्बितम्। ओघ० १८७।
**अमओ**-अमय, न किम्मयोऽपि। दश० १३३।
**अमग्गो**-अमार्ग, मिथ्यात्वादि। आव० ७६२।
**अमच्च**-अमात्य, राज्याधिष्ठायक। भग० ३१८। मन्त्रिव। दश० १०७।
**अमच्चा**-अमात्या, राज्याधिष्ठायका। भग० २६४।
**अमच्चो**-अमात्य। आव० ११६। राज्यचिन्तक। प्रश्न० ७९, ९६। राज्याधिष्ठायक। औप० १४। राजमन्त्री। बृ० तृ० ३३ अ। यो राज्ञोऽपि शिक्षा प्रयच्छति सो। व्य० प्र० १६९ आ। उत्त० ३८०।

**अमच्छरी**-अमत्सरी, परगुणग्राही। प्रश्न० ७४।
**अमण**-अवसानम्। विशे० १३०७।
**अमणाम**-अमनोऽमम्, न मनसा अन्त सगम्यन्ते, पुनः पुनः स्मरणगम्यम्। भग० ७२।
**अमणामत्ता**-अमनोऽम्यता, अमनोगम्यता। भग० २३। न मनसा अम्यते-गम्यते सस्मरणतोऽमनोऽम्यस्तद्भावस्तत्ता, प्राप्तुमवाञ्छिततत्वम्। भग० २५३। भोज्यतया मन आप्नुवन्तीति मनआपाः प्राकृतत्वाच्च पकारस्य मकारत्वे मणाम इति सूत्रे निर्देश, न मनआपा अमनआपा। प्रज्ञा० ५०४।
**अमणुण्ण**-अमनोज्ञम्, न मनसाः-अन्त संवेदनेन शुभतया ज्ञायन्ते। भग० ७२। अमनोज्ञ -रटनशील। ओघ० १५३। अमनोज्ञ-असविग्न। ओघ० १२०।
**अमणुण्णसंपओगसंपउत्ते** – अमनोज्ञसम्प्रयोगसम्प्रयुक्तः-अमनोज्ञ -अनिष्टो य शब्दादिस्तस्य यः सप्रयोगो-योगस्तेन सप्रयुक्तो य स। औप० ४३।
**अमणुण्णा**-असाम्भोगिका। बृ० द्वि० १८ आ।
**अमणुन्नत्ता**-अमनोज्ञता, न मनोज्ञा अमनोज्ञाः, विपाककाले दुःखजनकतया न मन प्रह्लादहेतु। प्रज्ञा० ५०४। न मनसा ज्ञायते सुन्दरता। भग० ३५३। कथयाऽप्यमनोरमतया। भग० २३।
**अमणुन्ने** – अमनोज्ञो-न कश्चिन् प्रतिभाति रटनशीलत्वात्त तश्चैकाकी हिण्डते। ओघ० १५०। सर्वेषामप्यनिष्ट। बृ० प्र० २६६ अ।
**अमणो**-अमनस्क, मनोरहित –सम्मूर्च्छज। ओघ० २२१।
**अमत**-अमृतम्-क्षीरोदधिजलम्। जीवा० २१०।
**अमम**-अमम, ममकाररहित। भग० २७६। द्वादशोऽर्हन्। ठाणा० ४३४। जातिवाचक शब्द। ज० प्र० १२८, २१३। भरते वर्षे मनुष्यभेदविशेष। ज० प्र० १२८।
**अममायमाणे**-अममीकुर्वन्-अस्वीकुर्वन्। आचा० १३२।
**अममे**-जिनविशेषनाम। सम० १५३। शतद्वारे द्वादशोऽर्हन्। अन्त० १६। अमम, पञ्चविंशतितमो मुहूर्त्त। ज० प्र० ४९१। मुहूर्तनामविशेष। सूर्य० १४६।
**अमम्मणा**-अनपखल्यमानना। औप० ७८।

**अमयं**-अमतं, अशोभन मतम्, नास्तिकादिदर्शनम्, अमृत वा, अमृतमिवामृतं, आत्मनि परमानन्दोत्पादकतया धनम्। उत्त० २०६। अमृतस्य-क्षीरोदधिजलस्य। जं० प्र० ५५।

**अमयघोसो**-चण्डवेगच्छिन्नो मुनि। (स०)

**अमयमेहे** – अमृतमेघ·–यथार्थनामा महामेघ। जं० प्र० १७४।

**अमयरसरसोवमं**-अमृतरसरसोपमम्, परमान्नम्। आव० १४४।

**अमर**-अमर·–देव। आव० ६०। मयूर, अमरो वा। प्रश्न० ८४।

**अमरकङ्का**-घातकीखंडपूर्वभरते पद्मनाभराजधानी। प्रश्न० ८७।

**अमरवइ**-अमरपति –इन्द्र। भग० १५८।

**अमरसोवमं**-आम्ररसोपमम्। नि० चू० प्र० ३४७ अ।

**अमरिसं**-अमर्ष, असहिष्णुता। दश० ३८।

**अमरिसणा** – अमसृणाः, प्रयोजनेष्वनलसा अमर्षणा वा, अपराधेष्वपि कृतक्षमा। सम० १५७। अमर्षणा, अपराधासहिष्णव अमसृणा वा कार्येष्वनलसा। प्रश्न० ७४।

**अमरिसिओ**-अमर्षित,। आव० ५६५। अमर्ष –मत्सरविशेष। आव० २४१।

**अमरिसो**-अमर्ष, अत्यन्ताभिनिवेश। उत्त० ६५६।

**अमर्षध्मातः**-मत्सरपूरित। आव० २४१।

**अमला**-शक्रदेवेन्द्रस्याग्रमहिषीनाम। जं० प्र० १५९। भग० ५०५। दक्षिणपश्चिमरतिकरपर्वतस्य पूर्वस्या भूताराजधान्यधिष्ठात्री, शक्रदेवेन्द्रस्य प्रथमाऽग्रमहिषी। जीवा० ३६५।

**अमलाते**-शक्रस्याग्रमहिष्या राजधानीविशेष। ठाणा० २३१।

**अमाइ**-अमायी, य शाठ्येन शिष्यान्न वाहयेत् स। दश० ५।

**अमाघाओ**-अमाघात, अमारि, अहिंसायात्रिपञ्चाशत्तम नाम। प्रश्न० ९९।

**अमात्यः**-राजमन्त्री। आव० ५५। अमात्य। ठाणा० १५५।

**अमायपुत्ते**-अमातापुत्र –रौद्रे नगरविनाशे स्वस्वजीवितरक्षणाक्षणिकतया यत्र माता पुत्रं न स्मरति। बृ० प्र० ३०४ अ।

**अमावासासंगुणं**-अमावास्यासगुणम्, याममावास्या ज्ञातुमिच्छसि तत्सङ्ख्यया गुणितम्। सूर्य० ११३।

**अमिअतित्तो** – अमृततृप्त, आवाधारहितत्वात्। आव० ४४७।

**अमिए**-अमित, भवनपतीन्द्रविशेष.। जीवा० १७०।

**अमिज्जं**-(अमेयं), विक्रयप्रतिषेधादेवाविद्यमानमातव्या, अविद्यमानमाया वा। भग० ५४४।

**अमितकौतुकाः**-(कोउगामिगा), कौतुकान्मृगा इव मृगा अज्ञत्वात्प्राकृतत्वादमितकौतुका। उत्त० ५०१।

**अमितगति**-भवनपतीन्द्रविशेष·। ठाणा० २०५।

**अमितवाहणे**-उत्तरदिग्वर्ती वायुकुमारेन्द्र। ठाणा० ८४।

**अमितवाहन**-भवनपतीन्द्रविशेष.। ठाणा० २०५।

**अमिनसेणे**-भरतेऽतीतोत्सर्पिणीकुलकर। ठाणा० ५१८।

**अमित्रक्रिया**-यन्मातापितृस्वजनादीनामल्पेऽप्यपराधे तीव्रदण्डस्य दहनाङ्कनताडनादिकस्य करणम्। ठाणा० ३१६।

**अमियं**-अमृतम्, अमितम्, मृष्टा पथ्या वा, सार्थिका अपरिमितम्। आव० ५९५। अमितम्, अनेकभवोपात्तमनन्तम्। आव० ६१०। अमित –प्रमाणाभ्यधिक। ओघ० १४२। अमित·–दिक्कुमाराणामधिपति·। प्रज्ञा० ९४। (अमित), अष्टमो दक्षिणनिकायेन्द्र। भग० १५७।

**अमियगती**-वायुकुमारेन्द्रविशेष। ठाणा० ८४।

**अमियणाणि**-अमितज्ञानी, जिन.। सम० १५३।

**अमियवाहण**-अमितवाहन·, भवनपतीन्द्रविशेष। जीवा० १७१।

**अमियवाहणे**-अमितवाहन, दिक्कुमाराणामधिपति। प्रज्ञा० ९४। उत्तरनिकाये अष्टम इन्द्र। भग० १५७।

**अमिल**-अमिलम्, ऊर्णावस्त्रम्। दश० १९३।

**अमिला**-उरभ्रा·। ओघ० १३५। उन्निया। दश० चू० ९२। वस्त्राणि। नि० चू० प्र० १४४ आ। रोमेसु कया। नि० चू० प्र० २५५ अ। नमिजिनप्रवर्तिनीनाम। सम० १५२। अम्लान (अव्यादि)। ठाणा० ३४०।

**अमिलाणि**-–महाधनमूल्यानि वस्त्राणि। आचा० ३९३।

**अमिलाया**-अम्लाना (त०)।

**अमिलियं**-अमिलितम्। विशे० ४०६।

**अमुगिभवं**-अमुकदेशोद्भवम्। बृं० प्र० ९८ आ।

**अमुच्छ**-(अमूर्च्छा) उपधावसंरक्षणानुबन्ध। भग० ९७।

**अमुणिओ**-अमुनय, गृहस्थाः। आचा० १९२।

**अमुणी**-अमुनय, मिथ्यादृष्टय। आचा० १९२।

**अमुत्ती** – अमुक्ति', सलोभता, परिग्रहस्य पञ्चविंशतितमं नाम । प्रश्न० ९२ ।

**अमुय**–अस्मृतम् , मनोऽपेक्षया अस्मृतम् । भग० १९७।

**अमुह**–अमुख, निरुत्तरम् । व्य० द्वि० १६० अ।

**अमुहा**–अमुखा , निर्वाच' । भग० ३७६ ।

**अमूढ**–अमूढः, अविप्लुत । दश० २६६ ।

**अमूढदिट्ठी**–अमूढदृष्टिः, बालतपस्वितपोविद्यातिशयदर्शनैर्न मूढा स्वभावाचलिता दृष्टि:–सम्यग्दर्शनरूपा यस्यासावमूढदृष्टि । प्रज्ञा० ५६ । अचलितसम्यग्दृष्टिः । दश० १०२। ऋद्धिमत्कुतीर्थिकदर्शनेऽप्यनवगीतमेवास्मद्दर्शनमिति मोहविरहिता सा चासौ दृष्टिश्च–बुद्धिरूपा । उत्त० ५६७ ।

**अमूढलक्खो** – अमूढलक्ष , सर्वज्ञेयाविपरीतवेत्ता । आव० २३४ ।

**अमूतरसा**–वापीनाम । ज० प्र० ३७१ ।

**अमेज्झं**–अमेध्यम् । आव० २१३ ।

**अमोसलि**–न विद्यते मोसली यत्र तदमोसलि । ठाणा० ३६१ ।

**अमोहं**–अमोघम् , अन्तरिक्षम् । सूत्र० ३१८ । अवन्ध्यम् । दश० २३३ । जूवगो । नि० चू० तृ० ७०आ।

**अमोहदंसणं**–अमोघदर्शनम् , पुरिमताले उद्यानम् । विपा० ५५ ।

**अमोहदंसि**–अमोहदर्शी, योऽमोहं–यथावत्पश्यति । दश० २०७ ।

**अमोहदंसी** – अमोघदर्शी, पुरिमतालनगरेऽमोघदर्शनीद्याने यक्ष । विपा० ५५ ।

**अमोहपहारी** – अमोघप्रहारी, जितशत्रो राज्ञो रथिक । उत्त० २१४ ।

**अमोहरहो**–अमोघरथ., जितशत्रो राज्ञो रथिक । उत्त० २१३ ।

**अमोहसत्थं**–अमोघशस्त्रम् । आव० ४०७ ।

**अमोहा** – अमोघा, पूर्वदिग्भागअञ्जनपर्वतस्य दक्षिणस्या दिशि पुष्करिणीविशेष. । जीवा० ३६४ । ठाणा० २३० । अलिप्फला, जम्वा सुदर्शनाया द्वितीयं नाम । जीवा० २९९ । सफला । ज० प्र० ३२६ । अमोघा', आदित्योदयास्तमययोरादित्यकिरणविकारजनिता दण्डा' । भग० १९६ । सिद्धशिलानाम । (टी०) । सूर्यबिम्बस्याधःकदाचिदुपलभ्यमानशकटोर्द्धिसंस्थिता श्यामादिरेखा । जीवा० २८३ ।

**अमोहे**–अमोह , वैश्रमणस्य पुत्रस्थानीयो देव । भग० २०० । ग्रैवेयकविमानप्रस्तटनामविशेष । ठाणा० ४५३ ।

**अमोहो**–अमोघ । उत्त० ४०३ । अमोघ., आदित्यकिरणविकारजनित आदित्योदगमनास्तमयने आताम्र कृष्णश्यामो वा शकटोर्द्धिसंस्थितो दण्ड , यूपक । आव० ७३६ । अमोह , शाहजनीनगर्यां देवरमणोद्याने यक्ष. । विपा० ६५।

**अम्मड**–( अम्मड. ), परिव्राजक । भग० ६५३ ।

**अम्मधाई**–धात्री । उत्त० ३३१।

**अम्मया**–अम्बा, पुरुषसिंहवासुदेवमाता । आव० १६२ । अम्बा । आव० ८१६ ।

**अम्माहिती** – पञ्चमवासुदेवमाता । सम० १५२ । व्य० प्र० १८० आ ।

**अम्मि(भि)ओ**–अभ्यागत. । आव० ५६० ।

**अम्मो**–अम्बा । आव० २७२ ।

**अम्मोगइया**–अहंपूर्विका । आव० २९३ ।

**अम्मोगतिया**–अभिमुख । आव० ३०० ।

**अम्ल** –(अविले), आश्रवणक्लेदनकृत् । ठाणा० २६ । अम्लम्–(अविलं), काञ्जिकम् । ठाणा० ४९२। रसविशेष । प्रज्ञा०४७३ ।

**अम्लवेतस**–अम्लरसपर्णिना । प्रज्ञा० १० ।

**अम्हपहिं**–अस्मदीयम् । आव० ८१३ ।

**अम्हच्चयं**–अस्मदीयम् , अस्मत्सम्बन्धि । दश० ११२ ।

**अम्हच्चय**–अस्माकीन । आव० २९५ ।

**अम्हे**–अस्माकम् । पउ० २८–४६ ।

**अयं**–अय, प्रत्यक्षगोचरीभूत ममारी । आचा० १६३ । इष्टफल, कर्म । जीवा० ३२ । लोहं । भग० ६९७ । इष्टफलम् । भग० ४ ।

**अयंतिय**–अयन्त्रित , अनियमित । उत्त० ४७८ ।

**अयंते**–( अडते ), पुन कायिका व्युत्सृज्य वसतिं प्रविशन । ओघ० ८१ ।

**अयंपिर**–अजल्पनशीला, नोच्चैर्लसविलग्ना । दश० २३६ ।

**अयंपुले** – वरुणस्य पुत्रस्थानीयो देव । भग० १९९ । मत्स्यबन्धविशेष । विपा० ८१ । गोशालकश्रावक । भग० ६८० ।

**अयंवुले**–आजीवकोपासकविशेष । भग० ३७० ।

**अय**–अय॰, लोह॰ । प्रज्ञा० २७ । पृथिवीभेद । आचा० २९ ।

**अयआकरो**–लोहाकर॰, यत्र लोहं ध्मायते । ठाणा० ४१९ ।

**अयकक्करभोई**–अजकर्करभोजी, अज॰–छागस्तस्य कर्कर–यच्चनकवत्कक्ष्यमाणं कर्करायते तच्चेह प्रस्तावान्मेदोदन्तुरमतिपक्व वा मास तद्भोजी वा । उत्त० २७४ ।

**अयकरए**–अजकरक, ग्रहविशेष । ठाणा० ७८ । जं० प्र० ५३४ ।

**अयकोट्ठंसि**–लोहप्रतापनार्थे कुशूले । भग० ६९७ ।

**अयकोट्ठसंठितो**–अय.कोष्ठसस्थित, अय कोष्ठ, लोहमय कोष्ठस्तद्वत्सस्थिता । जीवा० १०५ ।

**अयगरा**–अजगरा, उर परिसर्पभेदविशेषा॰ । प्रज्ञा० ४५ ।

**अयगरो**–अजगर, उर परिसर्पविशेष । जीवा० ३९ ।

**अयगोलो**–वालो गिद्धम्मो वा । नि० चू० प्र० ६२ अ ।

**अयणं**–अयनं, त्रय ऋतव । जीवा० ३४४ । सूर्य० ९१ । अतन–सातत्यभवनप्रवृत्त । विशे० १३४३ ।

**अयणाति**–अयनानि–ऋतुत्रयमानानि । ठाणा० ८६ ।

**अयणे**–(अयनं), त्रय ऋतव । भग० ८८८ ।

**अयतं**–(अजय), अयतनया । ओघ० २१९ ।

**अयथार्थम्**–पलाशाभिधानवन । आव० ५१ ।

**अयमाणे**–आददान, प्रवर्त्तमान । सूर्य० १२ । आयान–आगच्छन् । सम० ९४ ।

**अयमाणे** (अयमीणं)–अददान । जं० प्र० ४८२ ।

**अयराइं**–अनराणि, सागरोपमाणि । विशे० १०७१ ।

**अयरामरं**–अजरामरम्, अविद्यमानौ जरमरौ यस्मिन तन । आव० ८१ ।

**अयलं**–अचल स्वाभाविकप्रायोगिकचलनक्रियाव्यपोहात । जीवा० २५६ । अचल –स्वाभाविकप्रायोगिकचलनहेत्वभावात निश्चल,। भग० ७ ।

**अयलपुरं**–अचलपुर, नगरविशेष । उत्त० ९९ । पिंड० १८८ ।

**अयलभाया**–अचलभ्राता, नवमगणधर । आव० २४० ।

**अयले**–अचल, प्रथमबलदेव । आव० १५९, १७४ । सम० ८८ । अन्तकृद्दशाना प्रथमवर्गस्य षष्ठाध्ययनम । अन्त० १ ।

**अयलो**–अचल, उज्जयिन्या वणिग्दारक । उत्त० २१८ । स्वाभाविकप्रायोगिकचलनहेत्वभावात् । सम० ५ ।

**अयवीही**–अजवीथी, शुक्रमहाग्रहस्य सप्तमी वीथी । ठाणा० ४६८ ।

**अयशःकीर्त्तिनाम**–(अजसोकित्तिणाम), यदुदयवशात् मध्यस्थस्यापि जनस्याप्रशस्यो भवति तद् । प्रज्ञा० ४७५ ।

**अयशोभयम्**–अश्लाघाभयम् । आव० ६४६ ।

**अयसि**–अतसी, धान्यविशेष । दश० १९३ । भग० ८०२, ८०३ । भङ्गी, धान्यविशेष । भग० २७४ । अतसीपुष्पम् । उत्त० ४६० । कुसुंभिआ । ओघ० १४६ ।

**अयसिकुसुमं**–अतसीकुसुमम्,। प्रज्ञा० ३६० ।

**अयसिवणं**–अतसीवनम् । आव० १८६ ।

**अयसिवणे**–(अतसीवनम्) । भग० ३६ ।

**अयसी**–औषधिविशेष । प्रज्ञा० ३३ । धान्यविशेष॰ । उत्त० ६५३ ।

**अया**–द्विखुरविशेष । प्रज्ञा० ४५ ।

**अयागरं**–अयआकर, यस्मिन् निरन्तरं महामूषास्वयोदलं प्रक्षिप्याऽय उत्पाद्यते सः । जीवा० १२३ । लोहाकर–यत्र लोहं ध्मायते । भग० १९९ ।

**अयि**–अयि !, कोमलामन्त्रेण प्रयुज्यमान शब्द । दश० ४९ ।

**अयोगी**–न सन्ति योगा यस्य स, न योगीति वा यो–ऽभावयोगी, शैलेशीकरणव्यवस्थितः । ठाणा० ५० ।

**अयोग्य**–(अजोग्गो), अनल, अपच्चल । नि० चू० द्वि० २५ आ ।

**अयोध्या**–दशरथराजधानी । प्रश्न० ८७ । भरतसगरादिचक्रवर्त्तिना नगरी । प्रज्ञा० २०० । कोशला । जं० प्र० १३६ ।

**अयोमुहा**–अयोमुख, एकादशमान्तरद्वीप । प्रज्ञा० ५० ।

**अव्यापारोपेक्षाः**–मृतकस्वजनादिभिस्त सत्क्रियमाणमुपेक्षमाणास्तत्रोदासीना । ठाणा० ३५३ ।

**अव्याहतपौर्वापर्यम्**–वाण्यतिशयविशेष । सम० ६३ ।

**अरंजर**–अरञ्जरम्, उदकुम्भो, अलञ्जरम् । ठाणा० २८३, २९८ ।

**अरइ**–अरति, मोहनीयोदयाच्चित्तोद्वेग । भग० ८० ।

**अरइकम्मं**–अरतिकर्म, यदुदयेन तेष्वेवारतिरुत्पद्यते तत् । ठाणा० ४६९ ।

**अरइमोहणिज्जं**-अरतिमोहनीयम्-यदुदयवशात् पुनर्बाह्याभ्यन्तरेषु वस्तुषु अप्रीतिं करोति तत्। प्रज्ञा० ४६९।
**अरइयं**-अरतितो जं ण पच्चति। नि० चू० प्र० १८९ अ।
**अरई** – अरतिः, इष्टाप्राप्तिविनाशोत्थो मानसो विकारः। आचा० १६८। वातादिजनितश्चित्तोद्वेगः। उत्त० ३३८।
**अरए**-अरजाः, ग्रहविशेषः। जं० प्र० ५३५। ठाणा० ७९।
**अरक्खुरी**-आरक्षुरीम्, संवेगोदाहरणे मित्रप्रभस्य प्रत्यन्तनगरम्। आव० ७१०।
**अरगंतरं**-अरकान्तरम्। आव० ३४४।
**अरगाउत्तासिया**-आरकोत्तासिता, अरकैरायुक्ता-अभिविधिनाऽन्विता अरकायुक्ता, 'सिय'त्ति स्यात्-भवेत्, अथवाऽऽरकाउत्तासिता-आस्फालिता यस्यां सा। भग० १५४।
**अरघट्टघटीनिवहादिः**। उत्त० ५९९।
**अरजा**-अरजपू। जं० प्र० ३५७।
**अरणी**-काष्ठविशेषः। प्रज्ञा० २९।
**अरण्णं**-अरण्यम्, काननम्। दश० १४७।
**अरण्णवडिंसगं**-विमानविशेषः। सम० ३९।
**अरण्णानी**-अरण्यम्। उत्त० ३८१।
**अरति** – अरतिः, मोहनीयोदयजश्चित्तविकार उद्वेगलक्षणः। ठाणा० २६।
**अरते** – अरजा, ब्रह्मलोके विमानप्रथमप्रस्तटनाम। ठाणा० ३६७।
**अरय**-अरजासि स्वाभाविकरजोरहितत्वात्। सम० १४०।
**अरयं**-अरतं, रतस्याभावरूप, अरजो-रजसोऽभावरूप। अरस-शृङ्गारादिरसाभावम्। उत्त० ४४८।
**अरविंद**-अरविन्द, प्रत्येकवनस्पतिविशेष। प्रज्ञा० ३७। जलरुहविशेषः। प्रज्ञा० ३३।
**अरसं**-अरसम्, हिङ्ग्वादिभिरसंस्कृतम्, प्रश्न० १०६। प्रश्न० ६३। अविद्यमानाहार्यरसम्। हिङ्ग्वादिभिरसंस्कृतमिति। प्रश्न० १६३। असपत्तरसम्। दश० चू० ८३। असम्प्राप्तरसम्, हिङ्ग्वादिभिरसंस्कृतम्। दश० १८०।
**अरसजीवी** – अरसेन जीवितुं शीलमाजन्मापि यस्य स। ठाणा० २९६।
**अरसमेहं**-अरसमेघ, अमनोज्ञमेघ.। भग० ३०६।
**अरसाहारे** – अरसाहारः, अरस-हिङ्ग्वादिभिरसंस्कृतमाहारयतीति, अरसो वाऽऽहारो यस्यासावरसाहार। ठाणा० २९८।
**अरसाहिं**-प्रहरणविशेषैः। उत्त० ४६०।
**अरसिया**-अर्शांसि। उत्त० १२१।
**अरसेहि**-अविद्यमानरसैः। भग० ४८४।
**अरसो**-अरसः, हिङ्ग्वादिभिरसंस्कृत। औप० ४०।
**अरहंत**-अर्हन्तः, अशोकाद्यष्टमहाप्रातिहार्यादिरूपा पूजामर्हन्तीति। दश० ६२।
**अरहंतघरं**-अर्हद्गृहम्। आव० २९५।
**अरहंता** –अर्हन्, अमरवरविनिर्मिताशोकादिमहाप्रातिहार्यरूपां पूजामर्हतीति। भग० ३। अरहोऽन्त –अविद्यमानं रह -एकान्तदेशोऽन्तो–मध्यं गिरिगुहादीना सर्ववेदितया येषां ते। भग० ३। अरथान्त -अविद्यमानो रथ –स्यन्दन. सकलपरिग्रहोपलक्षणभूत अन्त –विनाशो जराद्युपलक्षणभूतो येषा ते। भग० ३। अरहन्तः–क्वचिदप्यासक्तिमगच्छन्त। भग० ३। अरहयन्–प्रकृष्टरागादिहेतुभूतमनोज्ञेतरविषयसम्पर्केऽपि वीतरागत्वादिकं स्वं स्वभावमत्यजन्। भग० ३। अर्हा –अर्हन्त। आव० ४०६। प्रज्ञा० ५५। अशोकाद्यष्टमहाप्रातिहार्यादिपूजामर्हतीति तीर्थकर। आव० ४८। अर्हत्ता। ठाणा० ३३२।
**अरहंतुवएसो**-अर्हदुपदेश, आगम। आव० ४५१।
**अरह**–अर्हन, अष्टविधमहाप्रातिहार्यरूपपूजायोगात् ठाणा० ४६५। अर्ह –पूजार्ह। भग० ६७।
**अरहट्टं**-अरघटिक। (आउ०)।
**अरहट्टो**-अरघट्टः। ओघ० १५८।
**अरहण्णए**-मुनिविशेष। (मर०)।
**अरहण्णओ**-अर्हन्नक, ईर्यासमितौ यस्य देवतया पादच्छिन्न। आव० ६१६।
**अरहण्णग** – तगरायामुग्णाभिहत (मर०)। अर्हन्नक, सद्व्यवहारकाचार्य। व्य० प्र० २५६ आ।
**अरहदत्ता** – अर्हद्दत्ता, अप्रतिहतराजकुमारमहाचन्द्रभार्या। विपा० ९५।
**अरहन्नओ**-अर्हन्नक। आव० ३८८। उत्त० ९०।
**अरहन्नग**-अर्हन्नक, मुनिविशेष। बृ० द्वि० ४९ अ।
**अरहमित्तो**-अर्हन्मित्र, आत्मदोषोपसंहारविषये द्वारवत्यां श्रेष्ठिविशेष। आव० ७१४। अर्हन्मित्र। आव० ३८८।

**अरहया**–अर्हत्ता, तीर्थकरता। आव० २३५।

**अरहस्सं** – अतीवरहस्यभूतं छेदशास्त्रार्थतत्त्वम्। बृ० तृ० २६५ आ।

**अरहसिज्जा**–अर्हच्छय्या, अर्हद्भवनम्। व्य० प्र० २५ आ।

**अरहा**–देवादिकृतां पूजामर्हन्तीति अर्हन्त, अरहस· अथवा नास्ति रह·–प्रच्छन्नं किञ्चिदपि येषां प्रत्यक्षज्ञानित्वात्ते। ठाणा० १७४। जिन। सम० १५३। अर्हन्–पूजामर्हतीति। अरहा, नास्य रहस्यं विद्यत इति वा। उत्त० २५७।

**अरहितं**–समपादेनेक्षणं लेष्टुकारोहेण वा साधुसाध्व्यो परस्परं दृष्टिबन्धो वा। बृ० द्वि० १४ अ।

**अरातिः**–व्याधि। विशे० ७७९।

**अरायाणि**–अराजानि, यत्र राजा मृत। आचा० ३७८।

**अरि**–अरि, सामान्यत शत्रुः। ज० प्र० १२०।

**अरिक्को**–अरिक्त.। ओघ० १९९।

**अरिट्ठ**–अरिष्ठ, पिचुमन्द. वृक्षविशेष। प्रज्ञा० ३१।

**अरिट्ठनेमि**–अरिष्टनेमि। आव० २७३, ५१५। दश० ३६, ९६। तीर्थंकरविशेष। बृ० प्र० ३० आ। अन्त० २, ५। समुद्रविजयसुत। उत्त० ४८९। समुद्रविजयस्य प्रथम पुत्र। उत्त० ४९६।

**अरिट्ठयं**–अरिष्टक, फलविशेष। प्रज्ञा० ३६०।

**अरिट्ठा**–मुद्गरगोत्रस्य नामविशेष। ठाणा० ३९०।

**अरिट्ठे**–धर्मजिनप्रथमशिष्य। सम० १५२।

**अरिणो**–अरय, इन्द्रियविषयकषायपरीषहवेदनोपसर्गरूपा। आव० ८०३।

**अरिदमन**–अरिदमणो, अभयप्रदानप्राधान्ये वसन्तपुरे राजा। सूत्र० १५०।

**अरिमर्दन**–सवासदृष्टान्ते वसन्तपुरे राजा। पिंड० ४८।

**अरिष्टनगरम्**–राममातुलहिरण्यनाभराजधानी। प्रश्न० ८८।

**अरिष्टपुरम्**–रुधिरराजधानी। प्रश्न० ९०।

**अरिस**–अर्शांसि, रोगविशेष। विपा० ४०। नि० चू० प्र० १८९ अ। नि० चू० द्वि० ६२ आ। अर्श, गुदाङ्कुर। ज० प्र० १२५।

**अरिहंत**–अर्हन्त, अरुहन्त.–न रुहन्तीति। दश० ७९। अशोकाद्यष्टमहाप्रातिहार्यादिरूपा पूजामर्हन्तीति अर्हन्त – शान्तार। आव० ११९।

**अरिहंतचेइय**–अर्हच्चैत्यम्, तीर्थकरप्रतिमा। आव० ७८६।

**अरिहंता**–अरिहन्ता, कर्मारिविनाशक.। भग० ३। कर्मारि–हन्ता। भग० ३। अरिहन्तार·, इन्द्रियविषयकषायपरीषहवेदनोपसर्गशम(नाश)का·। आव० ४०६। अरिहन्तार, रजोहन्तार·। आव० ४०६।

**अरिहमित्तो**–अर्हन्मित्र। उत्त० ९०।

**अरिहा**–अर्हाः। आव० ३८७।

**अरिहो**–अर्ह, अर्घ। प्रश्न० ७६।

**अरी**–अरि·, शत्रु। जीवा० २८०।

**अरुअ**–अरु, व्रणं। बृ० द्वि० ११ आ। अरु.–व्रणं। बृ० तृ० २०८ आ।

**अरुगं**–अरुक, व्रण·। बृ० द्वि० २५४ अ।

**अरुज्झंते**–अरुध्यमाणे–एतस्मिन् पात्रके। ओघ० १४५।

**अरुण**–अरुण, नन्दीश्वरसमुद्रानन्तरं द्वीप·, तदनन्तरं समुद्रोऽपि। प्रज्ञा० ३०७। सप्तमहाकुण्डेषु प्रथमभेद। आचा० २३५।

**अरुणुत्तरवडिंसगं**–ब्रह्मलोककल्पे विमानविशेष। सम० १४।

**अरुणप्पभ**–शीतलनाथदीक्षाशिबिका। सम० १५१।

**अरुणप्पभो**–अरुणप्रभ·, चतुर्थोऽनुवेलन्धरनागराज. तस्यैवावासपर्वतश्च। जीवा० ३१३। ठाणा० २२६।

**अरुणमहावरो**–अरुणमहावर., अरुणवरोदे समुद्रेऽपरार्द्धाधिपतिर्देव.। जीवा० ३६७।

**अरुणवर**–अरुणवर, अरुणसमुद्रानन्तर द्वीप, तदनन्तर समुद्रोऽपि। प्रज्ञा० ३०७। द्वीपविशेष·। ठाणा० २१७।

**अरुणवरभद्दो**–अरुणवरभद्र, अरुणवरद्वीपे पूर्वार्द्धाधिपतिर्देव.। जीवा० ३६७।

**अरुणवरमहाभद्दो**–अरुणवरमहाभद्र, अरुणवरद्वीपेऽपरार्द्धाधिपतिर्देव। जीवा० ३६७।

**अरुणवरावभासः**–अरुणवरसमुद्रानन्तरं द्वीप. तदनन्तर समुद्रोऽपि। प्रज्ञा० ३०७।

**अरुणवरावभासभद्दो**–अरुणवरावभासभद्र, अरुणवरावभासद्वीपे पूर्वार्द्धाधिपतिर्देव। जीवा० ३६७।

**अरुणवरावभासमहाभद्दो** – अरुणवरावभासमहाभद्र·, अरुणवरावभासद्वीपेऽपरार्द्धाधिपतिर्देव.। जीवा० ३६७।

**अरुणवरावभासवरो** – अरुणवरावभासवर, अरुणवरावभाससमुद्रे पूर्वार्द्धाधिपतिर्देव। जीवा० ३६७।

**असंवुडे**–असंवृत॰, प्रमत्त । भग॰ ३१५।
**असंशुद्धम्**–सङ्कीर्णम् । आव॰ ७६०।
**असंसट्ठा**–दायगो असंसट्ठेहिं हत्थमत्तेहिं देतित्ति । नि॰ चू॰ तृ॰ १२ अ । असंसट्ठा–अक्खरडिय । ठाणा॰ ३८६ ।
**असंसारसमावण्णा**–असंसारसमापन्ना, मुक्ता । प्रज्ञा॰ १८ ।
**असंसारो**–असंसार॰, संसारप्रतिपक्षभूतो मोक्ष । जीवा॰ ८ । न संसारोऽसंसार, मोक्ष । प्रज्ञा॰ १८ ।
**असंहनन**–असंघयण, आदिमाना त्रयाणां संहनननामन्यतमेनापि संहननेन विकल । व्य॰ प्र॰ ११४ अ ।
**अस**–अशनरूपाणि । व्य॰ द्वि॰ १२९ आ ।
**असइं**–असकृद्, अनेकधा । उत्त॰ ३१३ ।
**असइ**–अशति, अवाङ्मुखहस्ततलरूपा मुष्टि । जं॰ प्र॰ २८४ ।
**असई**–असती । ओघ॰ १४६ । संस्तरणाभावे । बृ॰ द्वि॰ १९३ आ ।
**असईपोसणया**–असतीपोषणता, असती पोषयति । आव॰ ८२९ ।
**असक्कओ**–असंस्कृत, स्वभावसम्पन्न । आव॰ ११४ ।
**असक्कय**–असंस्कृत, न विद्यते संस्कृतं–संस्कारो यस्य स । असत्कृत –अविद्यमानसत्कार । प्रश्न॰ ४१ ।
**असक्कयमसक्कय**–असंस्कृतासत्कृत, अविद्यमानसंस्कारसत्कार । न विद्यते संस्कृत–संस्कारो यस्य सोऽसंस्कृत॰, असत्कृतः–अविद्यमानसत्कारः । प्रश्न॰ ४१ ।
**असगडतातो**–ज्ञानासहन॰ । (मर॰)
**असगडपिया**–अशकटपिता, अशकटाया पिता । उत्त॰ १३० । नामविशेष । व्य॰ प्र॰ १८ अ । नि॰ चू॰ प्र॰ १५ अ ।
**असगडा**–अशकटा । उत्त॰ १२९, १३० । एतन्नाम्नी आभीरपुत्री । दश॰ १०५ ।
**असगडाताए**–अशकटापिता । व्य॰ प्र॰ १८ अ ।
**असच्चसंधत्तणं** – असत्यसन्धत्वम्, असत्य–अलीक सन्दधाति अच्छिन्न करोतीति, तद्भाव । द्वितीयाधर्मद्वारस्य षड्विंशतितमं नाम । प्रश्न॰ २६ ।
**असच्चो**–असत्य, सद्भ्योऽहित । प्रश्न॰ ३० ।
**असज्झं(ब्भं)**–ग्राम्यवचनं, कर्कशं, कटुक, निष्ठुरं, जकारादिक वा । नि॰ चू॰ तृ॰ ८० आ ।
**असज्झाइयं** – अस्वाध्यायिकम्, अशोभन आध्याय एव, रुधिरादि कारणे कार्योपचारात् । आव॰ ७३१ ।
**असढ**–शठभावरहित । ओघ॰ २२० ।
**असढकारणो**–'सढ' च्छादने, जो अप्पाणं मायाए ठाति–असढो होऊणं करण करेति । नि॰ चू॰ तृ॰ १४९ अ ।
**असढत्तणं**–अशठत्वम् । आव॰ ५२ ।
**असण**–अशनम्, घृतपूर्णादि । आव॰ ८११ । मण्डकौदनादि, आशु–शीघ्र क्षुधा–बुभुक्षा शमयतीति । आव॰ ८५० । बीजक । आव॰ १८६ । अश्यत इत्यशनम्, ओदनादि । दश॰ १४९ । अश्यते–भुज्यत इति अशेषाहाराभिधानम् । उत्त॰ ६०० ।
**असणवण**–अशनवनम्, बीजवनम् । आव॰ १८६ । वनविशेष । भग॰ ३६ ।
**असणि**–अशनि॰, वज्रम् । दश॰ १६४ । आकाशे पतन्नग्निमय कण । जीवा॰ २९ । प्रज्ञा॰ २९ । वइरोयणिंदस्स अग्गमहिसी । भग॰ ५०४ । ठाणा॰ २०४ ।
**असणिमेहा**–अशनिमेघा, करकादिनिपातवन्त, पर्वतादिदारणसमर्थजलत्वेन वज्रमेघा॰ । जं॰ प्र॰ १६८ । करकादिनिपातवन्त पर्वतादिदारणसमर्थजलत्वेन वा वज्रमेघा । भग॰ ३०६ ।
**असणे**–अशन, वृक्षविशेष । प्रज्ञा॰ ३१ । बीयक । उत्त॰ ६५३ ।
**असण्णातय**–असज्ञातीय । आव॰ ८४६ ।
**असतिं**–असकृत्, अनेकवारम् । जीवा॰ १२८ ।
**असतिणिवेसणे** । नि॰ चू॰ प्र॰ १६२ अ ।
**असतिवाडगा** । नि॰ चू॰ प्र॰ १६२ अ ।
**असतिसाहीओ** । नि॰ चू॰ प्र॰ १६२ अ ।
**असत्थ**–अशस्त्रम्, सप्तदशभेद संयमः । आचा॰ ५३ ।
**असत्थस्स**–अशस्त्रस्य, निरवद्यानुष्ठानरूपस्य संयमस्य । आचा॰ १५६ ।
**असदध्यारोपणम्**–आव॰ ८२१ ।
**असद्**–अविद्यमानम् । उत्त॰ ३४७ ।

**असद्दहंतो**-अश्रद्धानः, अश्रद्दधान । आव० १८९ ।
**असद्दहणं**-अश्रद्धानम् । आव० ५७३ ।
**असद्भुतैः**-साधोः कर्तुमयुक्तै. । आचा० २४२ ।
**असनिरूपेण**-ईतिरूपो हि पतङ्गादेरापात इति दश० १६४ ।
**असनो**-अशन, बीयकः । आचा० ४११ ।
**असन्निआउए**-असंज्ञ्यायु', असञ्ज्ञी सन् परभवयोग्य बद्धमांयु । भग० ५१ ।
**असन्निभूए**-असञ्ज्ञिभूत', असञ्ज्ञिभ्य उत्पन्न. । प्रज्ञा० ५५८ ।
**असन्निभूय**-असञ्ज्ञीभूता, असञ्ज्ञिनां या जायते सा । प्रज्ञा० ३३९ ।
**असन्नी**-असञ्ज्ञी, मिथ्यादृष्टिरमनस्को वा । प्रज्ञा० ३३९ । यथोक्तमनोविज्ञानविकल । प्रज्ञा० ५३३, ४०७ ।
**असबलायारे**-अशबलो यस्य सितासितवर्णोपेतबलीवर्द इव कर्बुर आचारो-विनयशिक्षाभाषागोचरादिक. । व्य० प्र० २३५ अ ।
**असबलो**-अशबल', एकान्तशुद्ध । उत्त० २५७ ।
**असब्भं** - असभ्यम्, अनुचितं जकारमकारादि । आव० ५८८ ।
**असब्भावं**-असद्भावम्, अविद्यमानाः सन्त -परमार्थसन्तो भावा-जीवादयोऽभिधेयभूता यस्मिन् तत् । उत्त० १५१ ।
**असब्भावगिहंतरं**-गृहस्य पार्श्वत पुरोहडेऽङ्गणे मध्ये वा । बृ० तृ० २३ आ ।
**असब्भावठवणा** - एक एवाक्ष' पिण्डकल्पनया बुद्ध्या कल्प्यते तत् । ओघ० १२९ । असद्भावस्थापना, असद्भावकल्पना । जीवा० १२२ ।
**असब्भावपट्ठवणा**-असद्भावप्रस्थापना । आव० १५१ ।
**असब्भावभावणा**-असद्भावभावना । उत्त० १६५, २२३ ।
**असब्भावुब्भावणा** - असद्भावोद्भावना । उत्त० १५७ । आव० ३१४ ।
**असब्भावो**-असद्भाव । आव० ३२० ।
**असब्भूए** - असद्भुतम्, अभूतोद्भावनरूपमशोभनरूपं वा । भग० २३२ ।
**असब्भूय**-असद्भुतम्, अनृतम् । आव० ५८८ ।
**असभ्यम्**-अश्लीलम् । आव० ८३४ । खरपरुषादि । उत्त० ३४७ ।
**असमंजसं**-अननुकूलम् । उत्त० २२६ ।
**असमओ** - असमय', असम्यगाचार, द्वितीयाधर्मद्वारस्य पञ्चविंशतितम नाम । प्रश्न० २६ ।
**असमणपाउग्गो**-अश्रमणप्रायोग्य. । आव० ७७८ ।
**असमणुन्न** - असमनुज्ञ', आचाराङ्गेऽष्टमाध्ययनस्य प्रथमोद्देशक । आचा० २६० । असमनोज्ञा', असाम्भोगिकाः । ओघ० ५४ ।
**असमर्था**-अतिभारेण न शक्नुवन्ति फलानि धारयितुम् । आचा० ३९१ ।
**असमाणो**-असमान', न विद्यते समानोऽस्य गृहिष्वाश्रयामूर्च्छितत्वेनान्यतीर्थिकेषु वाऽनियतविहारादिनेति, असदृग. समानो वा साहङ्कारो न तथेति । उत्त० १०७ ।
**असमारभमाणस्स** - असमारभमाणस्य, सङ्घट्टादीनामविषयीकुर्वत । ठाणा० ३२४ ।
**असमासदोसो**-असमासदोष, समासव्यत्यय सूत्रदोषविशेष । आव० ३७४ ।
**असमाहडा**-असमाहृता, अनङ्गीकृता । सूत्र० ३१४ ।
**असमाहडाए**-अशुद्धया लेश्यया-उद्गमादिदोषदुष्टमिदमित्येवं चित्तविप्लुत्या । आचा० ३३२ ।
**असमाहि**-असमाधि, अस्वास्थ्यनिबन्धना कायादिचेष्टा । आव० ४९९ । समाधि -समाधानं-ज्ञानादिषु चित्तैकाग्र्यं, न समाधि । उत्त० ६१४ । चित्तोद्वेगरूपम् । उत्त० ५५१ ।
**असमाहिकरो**-असमाधिकर, अस्वास्थ्यनिबन्धनकर । आव० ४९९ ।
**असमाहिठाणा** - असमाधिस्थानानि, न चित्तस्वास्थ्यस्याश्रया । प्रश्न० १४४ । सम० ३७ ।
**असमिक्खियप्पलावी** - बुद्धीए अणूहिय पुव्वावरं इहपरलोयगुणदोस वा जो सहसा भणइ । नि० चू० तृ० ८० आ । असमीक्षितप्रलापी, अपर्यालोचितानर्थकवादी । प्रश्न० ३६ ।
**असमित्त**-अश्वमित्र । विशे० ९३८ ।
**असमीक्ष्य**-अनालोच्य । उत्त० ३८७ ।
**असमोहएणं**-अनुपयुक्तेनात्मना । भग० २८९ ।
**असमोहयावि**-दण्डादुपरता असमुद्घाता वा । भग० ६६४ ।
**असम्मोहे** - असम्मोह, देवादिकृतमायाजनितस्य सूक्ष्म-

पदार्थविषयस्य च सम्मोहस्य मूढताया निषेधात्। ठाणा० १९२।

**असरण**–अशरण, शरणरहित, अर्थप्रापकाभावात्। प्रश्न० ११। अर्थकारकविरहित। प्रश्न० १९। गृहं नात्र शरणमस्तीत्यशरण' सयम। आचा० ३०३। शरणमनालम्बमानोऽदीनमनस्क'। आचा० ३०६।

**असहीण**–अमत। बृ० द्वि० १८७ अ। अस्वाधीन', परायत्त। आचा० १५२।

**असहु**–सुकुमारो राजपुत्रादिप्रव्रजित। ठाणा० १३८। अशक्तिष्ट। नि० चू० प्र० ३६० अ। असहिष्णु। ओघ० १४३। सुकुमारशरीरं। उप० मा० गा० ४०३। असमर्थ–राजपुत्रादि.। ओघ० १३८।

**असहू**–असमर्थ–क्षुत्पीडित। ओघ० ४४। राजादिदीक्षित'। बृ० द्वि० २२४ अ। रायाजुवराया सेट्ठि अमच्च पुरोहिया य एते असहू। नि० चू० प्र० १०१ अ। भिक्षावेला प्रतिपालयितुमशक्त। ओघ० ८६। असहिष्णु। आव० ८५८। असमर्थ। ओघ० १९५।

**असांव्यवहारिक**'–छेक। आव० ५२७।

**असाए**–असात, असातोदयकलित। जीवा० १३०।

**असाढभूई**–आसाढभूति, मायापिण्डोदाहरणे धर्मरुचिशिष्य। पिण्ड० १३७।

**असाढए**–तृणविशेष। प्रज्ञा० ३३।

**असाढा**–अषाढा, पूर्वोत्तराषाढानक्षत्रविशेष'। आव० १२०।

**असाधू**–असाधव, असयता। ठाणा० ३९९।

**असामन्नं** असामान्यम्, अनाचीर्णपूर्वम्। सूर्य० २३८।

**असारजरढा**–अकालवृद्धा। ओघ० २१८।

**असारणा**–अगवेषणा। बृ० प्र० १५३ अ।

**असारवणा**–अगवेषणा। नि० चू० द्वि० १३६ अ।

**असारहिए**–असारथिक, सारथिरहित। भग० ३२२।

**असारिए**–असागारिके। नि० चू० द्वि० ३१ आ।

**असावज्जं**–असावद्यम्, आयतनस्य प्रथम पर्याय.। ओघ० २२२।

**असासए**–अशाश्वतम्, प्रतिक्षणमावीचीमरणेन मरणम्। आचा० ६६। क्षणनश्वरत्वम्। भग० ४६९।

**असासयं**–अशाश्वतम्, प्रतिक्षण विशरारुत्वम्–अनित्यम्। प्रश्न० ९६।

**असाहुया**–असाधुता, द्रोहस्वभावता। उत्त० ११४।

**असाहू**–असाधु', अपगतभावसाधुत्व.। उत्त० ५८।

**असि**–असि', खड्ग.। जीवा० ११७। भग० १८२। प्रज्ञा० ९७। तलवार.। आव० ५८८, ४८७, ३६०। खड्गाभ्यासम्। प्रश्न० ९७। खड्ग.-करवालः। भग० १९१। शस्त्रविशेषः। आव० ३६०।

**असिअं**–असितम्, कृष्णमशुभं च ससारानुबन्धित्वात्। आव० ४३९।

**असिअपत्तं**–दात्रेण। भग० ६५०।

**असिए**–असित–अबद्ध–तैः सार्धं सगमकुर्वन् भिक्षु। आचा० ४३०।

**असिकच्छप**–अस्थिकच्छप', कच्छपविशेष.। सम० १३५।

**असिक्खग**–अशिक्षक, चिरप्रव्रजित। दशा० ३९।

**असिखेडगं**–असिखेटकम्, असिना सह फलकम्। प्रश्न० २१।

**असिचम्मपायं**–असिचर्मपात्रम्–स्फुरक, अथवा असि'–खड्गश्चर्मपात्र च–स्फुरक, खड्गकोशको वा। भग० १९१।

**असिचम्मपायहत्थकिच्चगए**–असिचर्मपात्रहस्तकृत्वाकृत, असिचर्मपात्र हस्ते यस्य स तथा कृत्यं–सङ्घादिप्रयोजनं गत–आश्रित कृत्यगतस्तत' कर्मधारय, अथवाऽसिचर्मपात्रं कृत्वा हस्ते कृत येनासौ असिचर्मपात्रहस्तकृत्वाकृत, प्राकृतत्वाच्चैव समास', अथवाऽसिचर्मपात्रस्य हस्तकृत्या–हस्तकरणं गत'–प्राप्तो यः स तथा। भग० १९१।

**असिट्ठो**–अशिष्ट, अप्रतिपादित। प्रश्न० १११। अशिष्ट'। आव० २९८।

**असिणाइ**–अन्ये श्रमणादयो येऽमुमप्रपिण्डमशितवन्त। आचा० ३३७।

**असिणाणए**–अस्नानतया। आचा० ३६४।

**असिता**–गृहवासविमुक्ता। आचा० २२२।

**असिद्ध**–न सिद्ध, हेतुदोषविशेष। ठाणा० ४९३। समारी। जीवा० ४३६।

**असिपंजरं**–असिपञ्जरम्, शक्तिपञ्जरम्। प्रश्न० ११५।

**असिपत्त**–असिपत्र, असीना पत्रम्। विपा० ७१। खड्गपत्रम्। जीवा० १०६। असि.–खड्ग स एव पत्रम्। ठाणा० २७३। असय.–खड्गास्तद्वच्छेदकतया पत्राणि–पर्णानि यस्मिंस्तत। उत्त० ४६०। प्रज्ञा० ८०। परमा-

धार्मिकेषु नवमः। उत्त० ६१४। नवम. परमाधार्मिक। आव० ६५०। सूत्र० १२४। सम० २९।

**असिपुत्रिक**। उत्त० ४५।

**असिय**–असित, कृष्ण। प्रज्ञा० ९१।

**असियअं**–दात्रम्। आव० २९५।

**असियग**–असियगम्, दात्रम्। आचा० ६१।

**असिरयणं**–असिरत्नम्, चक्रवर्त्तेरेकेन्द्रियपञ्चमरत्नम्। जं० प्र० २३८। ठाणा० ३९८।

**असिलट्ठी**–असियष्टिः, खड्गलता। विपा० ५६। असि–खड्ग स एव यष्टि–दण्डोऽसियष्टिः, अथवा असिश्च यष्टिश्च। जं० प्र० २६४।

**असिलायं**–विखरम्। बृ० तृ० २५ आ।

**असिलिट्ठं**–अश्लिष्टम्। आव० ९९।

**असिलोगभते**–अश्लोकभयम्, अकीर्त्तिभयम्। ठाणा० ३८९। अश्लाघाभयम्। आव० ४७२।

**असिलोगो**–अश्लाघा, अयशः। आव० ६४६।

**असिव**–अशिवम्, व्यन्तरकृतं व्यसनम्। आव० ६२६। उद्दाइयाए अभिद्रुत। नि० चू० प्र० ९७ अ। नि० चू० प्र० ७५ अ। व्यन्तरकृत उपद्रवः। बृ० प्र० २३१ अ। देवतादिजनितो ज्वराद्युपद्रव। ओघ० १३, १४।

**असिवाइखेत्तं**–अशिवादिक्षेत्रम्, अशिवादिप्रधानं क्षेत्रम्, आदिशब्दादूनोदरताराजद्विष्टादिपरिग्रह। दश० ३९।

**असिवुवसमणी**–अशिवोपशमनी कृष्णस्य चतुर्थी भेरी। आव० ९७।

**असिवोवसमणी**–अशिवोपशमनी, कृष्णस्य चतुर्थी भेरी, षण्मासान् सर्वे रोगोपशमनी। बृ० प्र० ५६ अ।

**असी**–असि, अस्युपलक्षित सेवकपुरुष। जीवा० २७९। हीरो। नि० चू० द्वि० १४१ अ। खड्ग, यमुपजीव्य जनः सुखवृत्तिको भवति, यद्वा साहचर्यलक्षणया असिशब्देन अत्र अस्युपलक्षिता पुरुषा गृह्यन्ते। जं० प्र० १२२।

**असील**–अशील, अविद्यमानशील, सर्वथा विनष्टचारित्रधर्मः। उत्त० ३४५। अशीला–दुःशीला.। ठाणा० ५५३।

**असीलया**–अशीलता चारित्रवर्जितत्वान्। अब्रह्मणः सप्त दश नाम। प्रश्न० ६६।

**असुआ**–असूया, अव्याजम्, ईर्ष्या। दश० २४३।

**असुइ**–अशुचि अश्रुतिर्वा। प्रश्न० ६३। स्नानब्रह्मचर्यादिवर्जितत्वान् अशुचिः, शास्त्रवर्जितो वा अश्रुतिः। भग० ३०८। स्नानब्रह्मचर्यादिवर्जिताः, अश्रुतय, शास्त्रवर्जिता। जं० प्र० १७०। विगन्धं शरीरमलादि। जीवा० २८२।

**असुण्णंतरा**–अशून्यान्तरा., एकोत्तरवृद्धया सर्वेदैवाशून्यान्यव्यवहितान्यन्तराणि यासा ता अशून्यान्तरा। विशे० ३३१।

**असुति**–अशुचीनि, अमेध्यानि मूत्रपुरीषाणि। ठाणा० ४७६।

**असुद्ध**–अशुद्धम्, आधाकर्मादि। ओघ० १७७।

**असुन्नकाल**–अशून्यकाल, नारकभवानुगससारावस्थानकालस्य द्वितीयभेद.। भग० ४७।

**असुभ**–अशुभकार्ये मृतकस्थापनादौ। व्य० प्र० १६९अ।

**असुभजोग**–अशुभयोग, अनुपयुक्ततया प्रत्युपेक्षादिकरणम्। भग० ३२।

**असुभणाम**–अशुभनाम, यदुदयवशात् नाभेरधस्तना पादादयोऽवयवा अशुभा भवन्ति तत्। प्रज्ञा० ४७४।

**असुभत्ता**–अशुभता, न शुभता। प्रज्ञा० ५०४। अमङ्गल्यता। भग० २५३।

**असुभाणुप्पेहा**–अशुभानुप्रेक्षा, अशुभत्वं संसारस्यानुप्रेक्षणं–अनुस्मरणम्। ठाणा० १८८।

**असुभाते**–असुखाय–दुःखाय। ठाणा० १४९। अशुभाय, अपुण्यबन्धाय असुखाय वा। ठाणा० २९२। पापाय, असुखाय वा–दुःखाय। ठाणा० ३५८।

**असुयंगं**–अश्रुताङ्गम्, नोश्रुताङ्गम्। उत्त० १४४।

**असुय**–अश्रुत परवचनद्वारेण। भग० २००, ११७।

**असुर**–रौद्रकर्मकारी। उत्त० २५६।

**असुरकुमार**–असुरकुमारा, देवविशेषा। भग० ११७। असुराश्च ते नवयौवनतया कुमारा इव कुमाराश्चेत्यसुरकुमारा। ठाणा० २८। भवनपतिभेदविशेष। प्रज्ञा० ६९।

**असुरकुमारीओ**–असुरकुमार्य, देवीविशेषा। भग० ११७।

**असुरदारे**–सिद्धायतनस्य द्वितीयं द्वारम्। ठाणा० २३०।

**असुरसुरं**–असुरसुरम्, अनुकरणशब्दोऽयम्। भग० २९४। सरडसरड अकरिंतो। ओघ० १८७। एवंभतशब्दरहितम्। प्रश्न० ११२।

**असुरा**–असुरा, न सुरा असुरा, भवनपतिव्यन्तरा। ठाणा० २२। भवनपतिविशेषा, भवनपतिव्यन्तरा वा।

ठाणा० १०४। असुरकुमार । भग० १३५। भवनपति-व्यन्तरलक्षण.। ठाणा० ४६६।

**असुरो**-असुर., आसुरभावान्वितत्वाद् यक्ष.। उत्त० ३६६। भवनवासी। बृ० द्वि० २६४ अ।

**असुह**-अशुभम्, अशुभस्वभावम्। भग० ७२। अशुभ - अतीवासातरूप'। जीवा० १०३।

**असुहदुक्खभागी** - असुखदु खभागी, दु खानुबन्धिदु ख-भागी। भग० ३०८।

**असुहया**-अशुभदा, असुखदा। आव० २३६।

**असुहिय**-असुखित., अविद्यमानसुहृद् वा। प्रश्न० ४१।

**असूइअ**-असूचितम्, व्यञ्जनादिरहितम्। दश० १८१।

**असूचया**-साक्षात्। ठाणा० ३०४।

**असूयपुत्तो**-असूयपुत्र । आव० २११।

**असूया**-अप्पणो दोस भासति ण परस्स। नि० चू० प्र० २७८ अ। आतगता। नि० चू० प्र० २७८ अ।

**असूचा**-स्फुटमेव परदोषोद्घट्टनम्। बृ० प्र० १२८ अ।

**असेयं**-मुख। नि० चू० प्र० ८८ आ।

**असोंढो**-अमज्जमाणो। नि० चू० द्वि० १४४ अ।

**असोअ**-अशोक, सुप्रभबलदेवपूर्वभवनाम। आव० १६३। अरुणद्वीपे महर्द्धिको देवविशेष । जीवा० ३६७। द्विसप्ततितमग्रह । जं० प्र० ५३५। वृक्षविशेष । जीवा० २२२। किन्नरव्यन्तराणा चैत्यवृक्ष'। ठाणा० ४४२। अशोकनामदेव । जं० प्र० ३२०। लताविशेष । प्रज्ञा० ३२। बिन्दुसारपुत्र.। बृ० प्र० ४७ अ। वृक्षविशेष । भग० ८०३। एकास्थिकवृक्षविशेष । प्रज्ञा० ३१। ठाणा० ७९। मल्लिनाथस्य चैत्यवृक्षः। सम० १५२। विजयपुरस्य नन्दनवनोद्याने यक्ष । विपा० ९५। बिंदुसारपुत्तो। नि० चू० प्र० २४३ अ।

**असोगचंदो**-अशोकचन्द्र', योगसङ्ग्रहेषु शिक्षाया दृष्टान्त.। आव० ६७९।

**असोगदत्तो**-अशोकदत्त, मायोदाहरणे स.केतपुरे समुद्रदत्तसागरदत्तपिता। आव० ३९४।

**असोगललिए**-चतुर्थबलदेवपूर्वभवनाम। सम० १५३।

**असोगवण** - अशोकवनम्। आव० १८६। पुष्करिण्या वनम्। ठाणा० २३०। वनखण्डनाम। जं० प्र० ३२०। भग० ३७।

**असोगसिरी** - पाडलिपुत्ते असोगसिरी राया। नि० चू० तृ० ४४ आ। बृ० द्वि० १५३ आ। अशोकश्रीः, बिन्दुसारपुत्र । विशे० ४०९।

**असोगा**-अशोका, नलिनविजयराजधानी। जं० प्र० ३५७। नागकुमारेन्द्रस्याग्रमहिषी। भग० ५०४। ठाणा० २०४।

**असोच्चा**-अश्रुत्वा। भग० ४२५। आगमानपेक्षम्। भग० ४५५।

**असोणिअ**-अशोणितम्, रक्तरहितम्। आव० ७६४।

**असोत्थो**-अश्वत्थ । आव० ४१७।

**असोयणया**-अशोचनता, दैन्यानुत्पादनेन। भग० ३५।

**असोयलया**-अशोकलता, लताविशेष.। भग० ३०६।

**असोयवडेंसए**। भग० १९४।

**असोयाओ**। ठाणा० ८०।

**असोही**-अशोधि, प्रतिसेवना, स्खलना। ओघ० २२५।

**अस्तमयनप्रविभक्तिः**-नवमनाट्यभेदः। जं० प्र० ४१६।

**अस्तान्ते**-अत्थतंमि, अस्तमयपर्यन्ते। उत्त० ४३५।

**अस्ति**-अत्थि, प्रदेशः। ठाणा० १५, ५१६।

**अस्तिकायः**- अत्थिकाय, धर्म्मादिपञ्चविधास्तिकायमाश्रित्य काय'। आव० ७६७।

**अस्तिकायधर्म** - अत्थिकायधम्म, अस्तिशब्देन प्रदेशा उच्यन्ते, तेषा कायो-राशिरस्तिकाय. स चासौ सञ्ज्ञया धर्मश्चेति, गत्युपष्टम्भलक्षण धर्मास्तिकाय । ठाणा० १५४। योऽस्तिकायाना धर्मादीना धर्मो-गत्युपष्टम्भादि.। उत्त०५६६।

**अस्तिकायाः**-अत्थिकाया, अस्तीत्यय त्रिकालवचनो निपात, अभूवन् भवन्ति भविष्यन्ति चेति भावना, अतोऽस्ति च ते प्रदेशाना कायाश्च राशय इति, अस्तिशब्देन प्रदेशा. क्वचिदुच्यते, ततश्च तेषा वा काया अस्तिकाया । ठाणा० १९६। अस्तीना-प्रदेशाना सङ्घातात्मकत्वात् काय.। ठाणा० १५।

**अस्तिनास्तिप्रवादपूर्वम्** - अत्थिनत्थिप्पवातपुव्वं, चतुर्थं पूर्वम्। ठाणा० ४८४। तत्र यद्वस्तु लोकेऽस्ति धर्मास्तिकायादि यच्च नास्ति खरशृङ्गादि तत् प्रवदति, सर्वं वस्तु स्वरूपेणास्ति पररूपेण नास्तीति प्रवदति। नदी १४१।

**अस्थानस्थापनम्** - अठाणठवणं - अयोग्यतास्थापनम्। ओघ० १३१।

**अस्थिका**-अट्ठिग, कपालिकापर्याय । व्य० प्र० २०६ अ।

**अस्थितकल्पिकः**-साधुभेदविशेष । भग० ४ ।

**अस्थिमिंजा**-अट्ठिमिंजा, अस्थिमध्यरस । ठाणा० १७० ।

**अस्थिमिंजानुसारि**-अट्ठिमिंजाणुसारी । ठाणा० ३७५ ।

**अस्थिरम्**-अथिर, जीर्णम् । आचा० ३९६ ।

**अस्थिरणाम** -( अथिरणाम ), यदुदयवशाज्जिह्वादीनामवयवानामस्थिरता भवति तत् । प्रज्ञा० ४७४ ।

**अस्निहः**-(अणिह), स्निह्यते-श्लिष्यतेऽष्टप्रकारेण कर्म्मणेति स्निहः, न स्निहोऽस्निह , यदि वा स्निह्यतीति स्निहो रागवान् यो न तथा सोऽस्निहः, उपलक्षणार्थत्वाच्चास्य रागद्वेषरहित इत्यर्थ । आचा० १९१ । स्नेहरहित. । आचा० २१० । स्निह्यतीति स्निहो, न स्निहोऽस्निह – रागद्वेषरहितत्वात् अप्रतिबद्ध । आचा० २५८ ।

**अस्पृशद्गति**-समयप्रदेशान्तरमस्पृशती । आव० ४४१ ।

**अस्फुटितम्**-अफुडिआ, सर्वविराधनापरित्याग. । दश० १९६ ।

**अस्संजए**-असयतः-गृहस्थ , स च श्रावक प्रकृतिभद्रको वा । आचा० ३२९ । असंयता-असयमवन्तः, आरम्भपरिग्रहप्रसक्ता , अब्रह्मचारिण । ठाणा० ५२४ ।

**अस्संजतो**-गिहत्थो । नि० चू० प्र० ३० आ ।

**अस्संजमो** – असंयम, प्राणातिपातादिलक्षण । आव० ५१६ ।

**अस्संपडियाए** – न विद्यते स्वं-द्रव्यमस्य सोऽयमस्वो निर्ग्रन्थ इत्यर्थ , तत्प्रतिज्ञया । आचा० ३२५ ।

**अस्सकण्णी** – अश्वकर्णी, वनस्पतिविशेष. । आचा० ५७ । साधारणवनस्पतिकायिकभेद. । जीवा० २७ ।

**अस्सकन्नि**-साधारणबादरवनस्पतिकायविशेष । प्रज्ञा० ३४ ।

**अस्सकन्नी**-अनन्तकायभेद । भग० ३०० । भग० ८०४ । कन्दविशेष. । उत्त० ६९१ ।

**अस्सतरो**-अश्वतर , खरतर , एकखुरश्चतुष्पद. । जीवा० ३८ । एकखुरचतुष्पद. । प्रज्ञा० ४५ ।

**अस्सपुरं**-अश्वपुरम् , पुरपसिंहपुरम् । आव० १६२ ।

**अस्सपुरा** – अश्वपुरी, पक्ष्मविजयराजधानी । जं० प्र० ३५७ ।

**अस्सरोनिवाए** – आमरोनिपातः, चपुटिका । जीवा० ३९९ ।

**अस्सलालापेलवं** । आचा० ४२३ ।

**अस्सलेसा**-नक्षत्रविशेष । ठाणा० ७७ ।

**अस्सवाणियओ**-अश्ववणिक् । आव० २२० ।

**अस्सवाहणिया**-अश्ववाहनिका । उत्त० २७७ । आव० ५६ ।

**अस्ससेणे**-अश्वसेनः, सनत्कुमारपिता । आव० १६२ । पार्श्वपिता । आव० १६१ ।

**अस्सादणसगोत्ते** – आस्वादनसगोत्रम् , अश्विनीनक्षत्रगोत्रम् । सूर्य० १५० ।

**अस्सामिणी**-अस्वामिनी । आव० २२४ ।

**अस्सायणे**-आश्वायनम् , अश्विनीगोत्रम् । जं० प्र० ५०० ।

**अस्सासणे** – अष्टाशीतिमहाग्रहे चतुर्दशमहाग्रह. । ठाणा० ७८ ।

**अस्सासो** – आश्वासः, प्राणिनामेव आश्वासनम् , अहिंसाया पञ्चाशत्तमं नाम । प्रश्न० ९९ ।

**अस्सिं**-अयम् । ठाणा० १३८ ।

**अस्सिंपडियाए**-एतत्प्रतिज्ञया एतान् साधून प्रतिज्ञायउद्दिश्य । आचा० ३६१ ।

**अस्सिंलोए**-अय लोक , अयं मनुष्यलोक । जीवा० ३४४ ।

**अस्सिणि**-अश्विनी, नक्षत्रविशेष. । सूर्य० १३० । ठाणा० ७७ । मेतार्यजन्मनक्षत्रम् । आव० २५५ ।

**अस्सीइ**-अश्विनी, नक्षत्रविशेष. । ठाणा० ४६९ ।

**अस्सेसा**-अश्लेषा । सूर्य० १३० ।

**अस्सो**-अश्व, घोटक , एकखुरश्चतुष्पद । जीवा० ३८ । अश्व । जीवा० २८४ । प्रज्ञा० ४५ ।

**अहं**-अधं-अधस्तात् । आचा० ६३ । अध.-बुध्ने । ओघ० १६८ ।

**अह**-एष । नि० चू० प्र० ११८ अ । व्य० प्र० १०३ आ । अयं । नि० चू० द्वि० ९२ आ ।

**अहक्खाओ**-यथास्थित । (सू०)

**अहक्खायं** – अथाख्यातम् , अथशब्दो यथार्थे, आङ्-अभिविधौ, याथातथ्येनाभिविधिना वा यत् ख्यात-कथित अकषायं चारित्रम् । प्रज्ञा० ६८ । यथाख्यातम्-अकषायमित्यर्थ । विशे० ५४७ । यथाख्यातं-सूक्ष्मसम्परायानन्तर सर्वत्र साधुजीवलोके ख्यात-प्रसिद्ध, परमं सर्वविशुद्धं चारित्रम् । विशे० ५५५ । यथाख्यात-यथैवाख्यातम्-अकषायम् । आव० ७८ । यथैवाख्यातं-यथाख्यातं प्रसिद्ध सर्वस्मिन जीवलोके, अकषायचारित्रमिति । आव० ७९ ।

अथशब्दो यथार्थ, आख्यातं-अभिहितं अथाख्यातम्। ठाणा० ३२४।

**अहक्खित्तो** । नि० चू० प्र० १६४ अ।

**अहगुरु**-येन प्रव्राजितो यस्य वा पार्श्वे अधीत, रत्नाधिकतरक'। व्य० द्वि० ३९५ अ।

**अहछंदो**-यथाछन्द, यथैच्छयैवागमनिरपेक्षं प्रवर्त्तते य। आव० ५१८।

**अहछंदिया**-अथाछन्दिका, अव्यापारिता, स्वयं प्रवृत्ता। बृ० द्वि० २६१ अ।

**अहण्णे**-अधन्य। उत्त० ३२९।

**अहतहं**-यथातथ, सूत्रकृताङ्गाद्यश्रुतस्कन्धे त्रयोदशमध्ययनम्। आव० ६५१। सूत्रकृताङ्गस्य त्रयोदशमध्ययनम्। उत्त० ६१४।

**अहतानि** । भग० ५०६।

**अहत्ता**-अधस्ता, गुरुपरिणामता। प्रज्ञा० ५०४। भग० २३। जघन्यता। भग० २५३।

**अहत्थे**-यथास्थान्, यथावस्थितान् यथार्थान् वा-यथाप्रयोजनान् भावान् जीवादीन्, यथा द्रव्यान्, पर्यायान। ठाणा० ३५१।

**अहप्पहाण**-यथाप्रधान.। भग० ६७९, ६८३। यथाप्रधान, यो यत्र ग्रामादौ प्रधान। ओघ० ५९।

**अहमं**-अधमम्, जघन्यम्। आव० ५८५।

**अहमंती**-अहं अता इति अन्तो-जात्यादिप्रकर्षपर्यन्तोऽस्या स्तीत्यन्त. अहमेव जात्यादिभिरुत्तमतया पर्यन्तवर्त्ती। ठाणा० ४७३।

**अहमिंदा**-अहमिन्द्राणि, अहं अहं इत्येवमिन्द्रा। सम० ४३।

**अहमो**-अधम, मलाविलत्वाज्जुगुप्सित। सत्र० ८२।

**अहम्म**-अधर्म, असयम। दश० २७१। धर्मविपक्ष - पापम्। उत्त० २७४। धर्मप्रतिपक्ष। उत्त० २४८। अध र्म्म, अधर्मपोषक दान अधर्मकारणत्वात। ठाणा० ४९६। भारहरामायणादिपावसुत। नि० चू० द्वि० ४ आ। धर्मविपक्ष विषयासक्तिरूपम्। उत्त० २८५।

**अहम्मक्खाई** - अधर्माख्यायिन, न धर्ममाख्यान्तीत्येवं शीला, न धर्मात् ख्यातिर्येषा ते। भग० ५६०।

**अहम्मखाई**-अधर्माख्यायी, अधर्मभाषणशीले। अधर्मख्याति -अधार्मिकप्रसिद्धिको वा। विपा० ४८।

**अहम्मजुत्तं**-अधर्मयुक्तम्, पापसम्बद्धम्। दश० ५२।

**अहम्मपलज्जणे**-अधर्मप्ररञ्जन', अधर्मे हिंसादौ प्ररज्यते अनुरागवान् भवतीति। विपा० ४८।

**अहम्माणी**-अहंमानी, अहमेव विद्वान् इति मानोऽस्येति। आव० २४१।

**अहम्माणुए**-अधर्मानुग', अधर्मान्-पापलोकान् अनुगच्छतीति। विपा० ४८।

**अहम्मिट्ठा**-अधर्मीष्टा अधर्मिष्ठा वा-धर्म्म.-श्रुतरूप एवेष्टो-वल्लभ पूजितो वा येषा ते धर्मेष्टा', धर्मिणा वेष्टा धर्मीष्टाः अतिशयेन वा धर्म्मिणो धर्मिष्ठास्तन्निषेधादधर्मेष्टा. अधर्मीष्टा अधर्मिष्ठा वा। भग० ५६०।

**अहम्मिट्ठे**-अधर्मिष्ठ, अतिशयेनाधर्मो-धर्मरहित.। विपा० ४८। अधर्मेष्ट, अधर्मो-धर्मविपक्ष -पापमिति स इष्ट -अभिलषितोऽस्येति, यद्वा अधर्मगुणयोगादधर्म, अतिशयेनाधर्म। उत्त० २७४।

**अहम्मियं**-आधार्मिकं-अधार्मिकाणामिदम्। प्रश्न ११०।

**अहय**-अहतम्, मलमूषिकादिभिरनुपद्रूषित, प्रत्यग्रमिति। औप० ६६। अव्यवच्छिन्नम्। औप० ७४। अपरिमलितम्। जीवा० २५४। तंतुग्गतं। नि० चू० प्र० २५३ अ। आख्यानकप्रतिबद्धम्, अव्याहतं, नित्यं, नित्यानुबन्धि वा। जीवा० २१७। प्रज्ञा० ८९। जं० प्र० ६३। अव्याहतम्। भग० १५४। सूर्य० २६७। अपरिभुक्तम्। भग० २५४।

**अहर**-अधरम्, अध -नरकतिर्यक्। दश० २७२। नरक। आव० ५३२।

**अहरगतिगमणं** - अधरगतिगमनम्, अधोगतिगमनकारणम्। प्रज्ञा० ३६८।

**अहराई**-अहोरात्रिकी। आव० ६४८।

**अहव**-अथवा-अथार्थे। विशे० ११३०।

**अहवण**-अथवा। बृ० द्वि० १४ आ। विकल्पप्रदर्शने। नि० चू० प्र० २९० अ। विकल्पार्थो निपात.। बृ० द्वि० २४६ आ।

**अहवा**-अनन्तरम्। नि० चू० प्र० १८ आ। अथ निपात। नि० चू० प्र० १६८ आ।

**अहव्वणवेद**-अथर्वणवेद, चतुर्णा वेदानां चतुर्थ वेद। भग० ११२।

**अहसंथडं**–निष्प्रकम्पं चम्पकपट्टादि। बृ० तृ० ३१ अ।

**अहसिता**–न सहेतुकमहेतुकं वा हसन्नेवास्ते। उत्त० ३४५।

**अहसुद्धो**–यथाशुद्ध, निर्दोषोपदेशदाता। बृ० तृ० ७१ आ।

**अहस्सिरे**–अहसनशील। उत्त० ३४५।

**अहस्ससच्चे**–अहास्यात्सत्य, हास्यपरित्यागात्सत्य, द्वितीयव्रतस्य प्रथमा भावना। आव० ६५८।

**अहाअत्थं**–यथार्थम्–निर्युक्त्यादिव्याख्यानानतिक्रमेणेत्यर्थ.। ठाणा० ३८८। अर्थस्य निर्युक्त्यादेरनतिक्रमेण। ठाणा० ५११।

**अहाउअकाल**–यथायुष्ककाल, देवाद्यायुष्कलक्षण। दश० ९।

**अहाउनिव्वत्तिकाले**–यथायुर्निर्वृत्तिकाल, यथा–येन प्रकारेणायुषो निर्वृत्तिः–बन्धनं, तथा य काल –अवस्थितिरसौ। भग० ५३३।

**अहाउयं**–यथायुष्कम्, यथाबद्धमायुष्कम्। प्रश्न० १९। यथायुष्कम्। आव० ११५, २५८। यथायु.–आयुषोऽनतिक्रमेण। उत्त० १८८।

**अहाकडं**–यथाकृतम्, गृहस्थेन स्वार्थं निर्वर्त्तितम्। प्रश्न० १२७।

**अहाकडा**–आधाकृता, साधूनाधाय–सम्प्रधार्य कृता। बृ० प्र० ९२ अ।

**अहाकप्पं**–यथाकल्पम्, प्रतिमाकल्पानतिक्रमेण तत्कल्पवस्त्वनतिक्रमेण वा। भग० १२४। कल्पनीयानतिक्रमेण प्रतिमासमाचारानतिक्रमेण वा। ठाणा० ३८८।

**अहाकम्मं**–यथाकर्म, बद्धकर्मानतिक्रमेण। भग० ६५।

**अहाकम्मिए**। भग० ४६६।

**अहागडा**–प्राशुकानि, अल्पपरिकर्माणि। ओघ० ९२।

**अहागडे**–यथाकृतम्, आत्मार्थमभिनिर्वर्त्तितम्। दश० ७२।

**अहाचरा**–अधश्चरा – विलवासित्वात्सर्प्पादय। आचा० २९१।

**अहाच्चयं**–दृष्टिवादे सूत्रभेद.। मम० १२८।

**अहाच्छंदे**–यथाछन्दान्, स्वच्छन्दान्। ओघ० ५६।

**अहाछंद**–यथाछन्दा –यथा कथञ्चिन्नागमपरतन्त्रतया छन्द.–अभिप्रायो–बोध। भग० ५०२। यथा स्वाभिप्रेत तथा प्रज्ञापयन्। नि० चू० द्वि० २३ आ।

**अहाजातो**–अप्पोवधी। नि० चू० द्वि १३१ आ।

**अहाजायं**–रजोहरणमुखवस्त्रिकाचोलपट्टयुत. रचितकरपुटश्च। बृ० तृ० १० आ।

**अहाडं**–यथाकृतम्, परिकर्मशून्यं। बृ० द्वि० २०२ आ।

**अहाणी**–असीयण। नि० चू० प्र० ५ आ।

**अहातच्चं**–यथातत्त्वम्, तत्त्वानतिक्रमेण वर्त्तमानम्। भग० १२४। सप्तसप्तमिकेत्यभिधानार्थानतिक्रमेणान्वर्थसत्यापनेनेत्यर्थ.। ठाणा० ३८८। शब्दार्थानतिक्रमेण। ठाणा० ५११।

**अहातच्चे**–यथातथ्यो यथातत्त्वो वा, यथा–येन प्रकारेण तथ्यं–सत्य तत्त्वं वा। भग० ७०९।

**अहातच्चो**–जहेव दिट्ठो तहेव जो भवति सो अहातच्चो भवति। नि० चू० द्वि० ८६ अ।

**अहापज्जत्तं**–यथापर्याप्तम्। भग० ११९।

**अहापडिरूवं** – यथाप्रतिरूपम्। आव० १९९। भग० ६६१।

**अहापदं**–यथापदम्। आव० ३५२।

**अहापरिग्गहिए**–यथाप्रतिगृहीतम्, यथाप्रतिपन्नम्। भग० ११६।

**अहापरिन्नायं**–यावन्मात्र क्षेत्रमनुजानीषे तावन्मात्रं कालं तावन्मात्रं च क्षेत्रमाश्रित्य वयं वसाम इतियावत्। आचा० ४०३।

**अहापवत्तं**–यथाप्रवृत्तम्। आव० ११५।

**अहाबायरा**–यथाबादरा., यथोचितबादरा आहारपुद्गला इत्यर्थ। भग० १८९। यथाबादराणि, स्थूलतरस्कन्धान्यसाराणि। भग० २५१।

**अहाबायरे**–यथाबादरम्, स्थूलप्रकारम्। भग० २५१। असारम्। भग० १५४।

**अहाभद्दगो**–यथाभद्रक.। आव० ७३९।

**अहाभद्दे**–यथाभद्र, शासनबहुमानवान्। बृ० प्र० ३ ३ अ।

**अहाभद्दो**–दाणरुयी। नि० चू० प्र० १९९ आ। दंसणविरहितो अरहंतेसु तस्सासणे साधू उभयभद्दसीलो। नि० चू० प्र० ३२५ अ।

**अहाभावो** – स्वपरिग्रहे धारणम्। बृ० द्वि० २४ आ। अधाप्रवृत्ति। नि० चू० प्र० २५१ आ। प्रतिस्वामितं–प्रतिगृहीतं न तु भुज्यते यत्पात्रादि। बृ० द्वि० २८६ आ।

**अहामग्गं**–यथामार्गम्, ज्ञानादिमोक्षमार्गानतिक्रमेण क्षायोपशमिकभावानतिक्रमेण वा वर्त्तमानम्। भग० १२४। मार्ग –क्षायोपशमिको भावस्तदनतिक्रमेण। ठाणा० ३८८।
**अहारिणो**–मनसोऽनिष्टा। आचा० २४२।
**अहारियं**–यथारीतम्, रीतं–रीति –स्वभाव, तस्यानतिक्रमेण वर्तते तत्, यथास्वभावमित्यर्थ। भग० २१२। यथाऽऽर्यम्। आचा० ३७९। यथाऋजु। आचा० ३८१।
**अहालंद** – मध्यममष्टपौरुषीमानम्। बृ० तृ० ३५ आ। पोरिसी। नि० चू० तृ० १८ अ। जघन्येन तरुणीदकार्द्रकरगोषकाल, उत्कृष्टत पूर्वकोटी। बृ० द्वि० ३२ आ। सजोगवर्जिते तृतीयभेद। नि० चू० प्र० २३९ अ। यावन्मात्रं कालं भवाननुजानाति। आचा० ४०३।
**अहालहुस्सए**–स्तोकप्रायश्चित्तदानम्। बृ० तृ० २०९ आ।
**अहालहुस्सगाई**–यथालघुस्वकानि, 'यथे'ति–यथोचितानि लघुस्वकानि–अमहास्वरूपाणि, महता हि तेषा नेतुं गोपयितुं वाऽशक्यत्वादिति यथालघुस्वकानि, अथालघूनि–महान्ति वरिष्ठानीति वृद्धा। भग०।
**अहावच्चा**–यथापत्यानि, पुत्रस्थानीया। भग० १९७।
**अहासंथडं**–णिप्पकपं पट्टं। नि० चू० प्र० १७० अ।
**अहासंथडा**–अचला। नि० चू० प्र० १६० आ।
**अहासच्चं**–यथासत्यम्, इद यन्मया कथित कथ्यमानं च तद्यथासत्यम्, याथातथ्यम्। आचा० १८३।
**अहासन्निहिआ**–यथासन्निहिता। आव० १७५।
**अहासम्मं**–यथासाम्यम्, समभावानतिक्रमेण वर्त्तमानम्। भग० १२४।
**अहासुत्तं** – यथासूत्रम्, सूत्रानतिक्रमेण। ठाणा० ३८८। सामान्यसूत्रानतिक्रमेण वर्त्तमानम्। भग० १२४।
**अहासुहुमणियंठो** – यथासूक्ष्मनिर्ग्रन्थ, यथासूक्ष्म एतेषु सर्वेषु। उत्त० २५७।
**अहासुयं**–यथाश्रुत यथासूत्र वा। आचा० ३०१।
**अहासुहुमकसायकुसील**–कषायकुशीलस्य पञ्चमो भेद। भग० ८९०।
**अहासुहुमपुलाए**-पुलाकस्य पञ्चमो भेद। भग ८९०। यथासूक्ष्मपुलाक, पुलाकस्य पञ्चमो भेद। पञ्चस्वपि पुलाकेषु य स्तोक स्तोक विराधयति स। उत्त० २५६।
**अहासुहुमबउस**–बकुशस्य पञ्चमो भेदः। भग० ८९०। उत्त० २५६। यथासूक्ष्मबकुश, योऽक्ष्णोः पुष्पिकामपनयति, शरीराद्वा धूल्यादिकमपनयति। उत्त० २५६।
**अहासुहुमे**–यथासूक्ष्मान् सारान्। भग० १५५।
**अहि**–सर्प, पृथिव्याश्रितो जीवविशेष। आचा० ५५। सर्प। उत्त० ६९९। उर परिसर्पभेद। सम० १३५। परिसर्पविशेष। प्रज्ञा० ४५।
**अहिंडेतओ**–अहिण्डमान, असहिष्णोर्द्वितीयभेद। आव० ८५८।
**अहिंसा**–अनुकम्पा। प्रश्न० १०३। प्राणातिपातविरति। दश० २१।
**अहिअ**–अधिकम्, अहितम्, अपथ्यम्। ज० प्र० १६७।
**अहिअगामिणिं** – अहितगामिनीम्, उभयलोकविरुद्धाम्। दश० २३५।
**अहिउत्थ**–अभ्युषित। उत्त० १२०।
**अहिकरणं**–अधिकरणम्, गन्त्रीयन्त्रकादि। भग० १३५।
**अहिकरणकरो** – अधिकरणकर, योऽन्येषा कलहयति, द्वादशमसमाधिस्थानम्। आव० ६५३।
**अहिकरणोईरण**–अधिकरणोदीरण, योऽन्येषां यन्त्रादीन्युदीरयति, त्रयोदशमसमाधिस्थानम्। आव० ६५३।
**अहिकिच्च**–अधिकृत्य–आश्रित्य। भग० २८।
**अहिक्खेव**–अधिक्षेप, निन्दाविशेष। प्रश्न० ४१।
**अहिगमरुइ**–अधिगमरुचि, विशिष्टं परिज्ञानं तेन रुचिर्यस्यासौ। प्रज्ञा० ५८।
**अहिगमास**–अधिकमास। दश० २७०।
**अहिगमो**–अधिगम, विशिष्ट परिज्ञानम्। प्रज्ञा० ५०। ज्ञानम्। आव० ५३०। अभिगम –सेवा। सम० ५३।
**अहिगरणं**–अधिकरणम्, कलह। सूत्र० ६६। बृ० तृ० १५२ आ। कूटपाशरूपम्। भग० ९३। अधिक्रियते आत्मा नरकादिषु येन तदधिकरणं–अनुष्ठान बाह्य वा वस्तु चक्रमहादि। आव० ६११। कलह, यन्त्रादि वा। आव० ६५४। ज्योतिषादि। आव० ६६२। अनुष्ठानविशेष, बाह्य वा वस्तु चक्रखड्गादि। भग० १८१। अनुष्ठान बाह्य वा वस्तु। ठाणा० ४१। वास्तुदूपलशिलापुत्रकगोधूमयन्त्रकादि। आव० ८३१। रात्रि। ओघ० १८२।

**अहिगरणकिरिया** – अधिकरणक्रिया, दुर्गतौ ययाऽधिक्रियन्ते प्राणिन सा। प्रश्न० ३७।

**अहिगरणि**–अधिकरणि, सुवर्णकारोपकरणम्। जं० प्र० २२६।

**अहिगरणिए**–अधिकरणकर–कलहकरम्। आचा० ४२५।

**अहिगरणिया**–अधिकरणिकी–अधिक्रियते नरकादिष्वात्माऽनेनेति अधिकरणं–अनुष्ठानविशेष बाह्यं वा वस्तु चक्रखड्गादि, तत्र भवा तेन वा निर्वृत्ता, क्रियाभेदविशेष। भग० १८१। अधिक्रियत आत्मा नरकादिषु येन तदधिकरणम्–अनुष्ठानं वाह्य वा वस्तु चक्रमहादि, तेन निर्वृत्ता क्रिया। आव० ६११। सम० १०।

**अहिगरणी**–अधिकरणी, यत्र लोहकारा अयोघनेन लोहानि कुट्टयन्ति। भग० २५१।

**अहिगरणे**–अधिकरणसिद्धान्त। बृ० प्र० ३१ आ।

**अहिगारनिउत्तो**–अधिकारनियुक्त। आव० ७३८।

**अहिगारो**–अधिकार, प्रयोजनं, प्रस्ताव। आव० २७६। विशे० ८५९। ओघत प्रपञ्चप्रस्तावरूप। दश० २७८। आ–अध्ययनपरिसमाप्तेर्योऽनुवर्त्तते स-। दश० १३। नियोग। प्रश्न० ६६। प्रयोजनम्। दश० १३५। व्य० प्र० ४ अ। तृप्ति। उप० मा० गा० ३७१।

**अहिगरिणता** – अधिकरणिकी–खड्गादिनिर्वर्त्तनी। ठाणा० ३१७।

**अहिछत्ता** – अहिच्छत्रा – नगरीविशेष। उत्त० ३७९। पार्श्वनाथस्य धरणेन्द्रमहिमास्थानम्। आचा० ४१८। जङ्गलेषु जनपदेष्वार्यक्षेत्रम्। प्रज्ञा० ५५। सङ्गपरिहरणविषये पुरी। आव० ७२३।

**अहिजुजिय**–अभियुज्य, वशीकृत्य, आश्लिष्य वा। भग० १३२।

**अहिज्ज**–अधिल्य। उत्त० ३६२।

**अहिज्जिउं**–अध्येतुम्, पठितुम्, श्रोतु, भावयितुम्। दश० १३८।

**अहिट्ठए**–अधिष्ठाता, तप प्रभृतीना कर्त्ता। दश० २३८। अधितिष्ठति यथावत् करोति। दश० २५६।

**अहिट्ठग**–अधिष्ठाता, कर्त्ता। दश० २०६।

**अहिट्ठाणं**–अधिष्ठानम्, अपानप्रदेश। आव० ४१९।

**अहिट्ठाणजुद्धं**–अधिष्ठानयुद्धम्। आव० ९८।

**अहिट्ठित्तए**–अधिष्ठातुम्–परिभोक्तुम्। बृ० द्वि० २१८ अ।

**अहिट्ठित्ता**–अधिष्ठाय, आरोहण कृत्वा। दश० ६१।

**अहिठाणि**–अधिष्ठाने, अपानप्रदेशे। ओघ० ६९।

**अहित**–अनुचितविधायी। बृ० प्र० २१४ अ। अपथ्यम्। उत्त० २७६।

**अहितुंडए**–आहितुण्डिक, गारुडिक। दश० ३७।

**अहिनंदइ** – अभिनन्दति, बहु मन्यते। आव० ५९०।

**अहिन्नायदंसणे**–अभिज्ञातदर्शने–सम्यक्त्वभावनया भावित। आचा० ३०४।

**अहिमडे**–अहिमृत, मृताहिदेहः। जीवा० १०६।

**अहिमन्त्र**–मन्त्रसाधनोपायशास्त्राणि। सम० ४९।

**अहिमर**–अभिमर, अभिमुखमाकार्य मारयति म्रियते वेति। ओघ० १८। राजादिघातकः। विशे० ७४७। विशे० ९७१। अभिमुख परं मारयति यः स। प्रश्न० ४६।

**अहिमरका**–घातका। बृ० द्वि० ८२ आ।

**अहिमार**–अभिमार, वृक्षविशेष। उत्त० १४३।

**अहिमासयम्मि**–अधिकमासे। आव० ५५७।

**अहियं**–अधिक, अहितं वा अधिक, अपथ्यं वा। भग० ३०६। अर्गलम्। उत्त० ६२३। अर्गलं, शीघ्रतरम्। उत्त० ७। अतिशयेन। जीवा० २२९। जीवा० ३५५। अहितम्, अश्रेय। आचा० ३८।

**अहियपिच्छणिज्जं**–अधिकप्रेक्षणीयम्। आचा० ४२३।

**अहियाते**–अहिताय, अपथ्याय। ठाणा० १४९। अपायाय। ठाणा० २९२। अपथ्याय। ठाणा० ३५८।

**अहियासएज्जा**–अधिसहेत्, वर्त्तयेत, पालयेत। सूत्र० १६४।

**अहियासणा**–अभिसहना, उपसर्गसहनम्। आव० ६६०। अतिसहना। आव० ७९९।

**अहियासेत्तए**–अभ्यासितुम्। दश० ९३।

**अहियासेमि** – अभ्यासयामि–वेदनायामवस्थानं करोमि। ठाणा० २४७।

**अहियोगो**–अभियोग, बलात्कार। बृ० तृ० ७७ अ।

**अहिराया**–अधिराजा, मौल पृथिवीपति। बृ० तृ० ४ अ।

**अहिरिक्कं**–उत्त्रामनम्। व्य० प्र० १४९ अ।

**अहिरीमाणा**–अह्रीमनस–अलज्जाकारिण। आचा० २४३।

**अहिर्बुध्न**–उत्तरभाद्रपदादेवता। जं० प्र० ४९९।

**अहिलाणं**-मुखसयमनम्। भग० ४८०, जं० प्र० २६५। औप० ७१। मुखसयमनविशेष। जं० प्र० २३५।

**अहिलिंति**-समागच्छन्ति। बृ० द्वि० १०८ अ।

**अहिलोडिया**- गोपालिकाख्यो हिंसकजीव। बृ० तृ० १९० आ।

**अहिल्लियाए**-अहिल्लिका, मैथुने दृष्टान्त। प्रश्न० ८९।

**अहिवई**-अधिपति-आचाय। ओघ० ७४।

**अहिवास**-अधिवास-अवस्थान। भग० ४७०।

**अहिवासिऊण**-अधिवास्य। आव० २६१।

**अहिसंका**-अभिशङ्का, तथ्यनिर्णय। सूत्र० ३९३।

**अहिसक्कणं**-उस्सूरे आगच्छति। नि० चू० प्र० १४२ आ। अभिष्वष्कणं-तस्यैव विवक्षितकालस्य सवर्द्धनं, परत करणमित्यर्थ। बृ० प्र० २६८ आ।

**अहिसरणेहिं**-अग्गतो वा सरेति। नि० चू० द्वि० ४९ आ।

**अहिसरिया**-अभिसृता। आव० ३७२।

**अहिसलागा**-मुकुलि-अहिभेदविशेष। प्रज्ञा० ४६।

**अहिसेया**-अभिसेका, गणावच्छेदिनी। बृ० द्वि० २६३ अ।

**अही**-अहि, सर्प, उर परिसर्पविशेष। जीवा० ३९। प्रज्ञा० ४५। मुकुलि-अहिभेदविशेष। प्रज्ञा० ४६। सामान्यत. सर्प। जं० प्र० १२५।

**अहीणपडिपुन्नपंचिंदियसरीरं**-अहीनप्रतिपूर्णपञ्चेन्द्रियशरीर, प्रतिपूर्णानि स्वकीयस्वकीयप्रमाणत, प्रतिपुण्यानि वा-पवित्राणि पञ्चेन्द्रियाणि-करणानि यस्मिस्तत्तथा, अहीनमङ्गोपाङ्गप्रमाणत प्रतिपूर्णपञ्चेन्द्रिय प्रतिपुण्यपञ्चेन्द्रियं वा शरीर। ठाणा० ४५८।

**अहीणपुन्नपंचिंदियसरीरं**-अहीनानि-स्वरूपन पूर्णानि सङ्ख्यया, पुण्यानि वा-पूतानि पञ्चेन्द्रियाणि यत्र तत्तथा तदेवंविधं शरीर यस्य स। भग० ५४१।

**अहीणो**- अहीन, प्रकृष्ट, अधीनो वा स्वायत्त। प्रश्न० १३६।

**अहीनग्गहणं**-समग्रहणम्। व्य० प्र० ८६ आ।

**अहीलणिज्जं**- अहीलनीयम्. अवज्ञातुमनुचितम्। उत्त० ३६५।

**अहुणुव्वासिय**-अधुना यदुद्वमितम्। ओघ० ५७।

**अहुणोत्तणो**-अधुनातन। आव० ४२१।

**अहुणोववन्ने**-अधुनोपपन्न, अचिरोपपन्न। ठाणा० १८७।

**अहुमरेंतो**-उपद्रवन्। आव० २७३।

**अहे**-अध, आकाश। सूर्य० ४५। अथशब्दार्थे। बृ० द्वि० १७९ अ। आमन्त्रणार्थो निपात। भग० ४६०। अथ-आनन्तर्यार्थोऽयं शब्द। भग० ८३, ८६। गर्त्तायाम्। उत्त० २१३। भूमितले। प्रज्ञा० ८०। अध। ठाणा० १६२। अथेति परिप्रश्नार्थ। ठाणा० ४०६। अध.-अधस्तात् नीचै। भग० २६९। अथशब्दश्चेह पदत्रयेऽपि त्रयाणामप्याश्रयाणा प्रतिमाप्रतिपन्नस्य साधो कल्पनीयतया तुल्यताप्रतिपादनार्थ। ठाणा० १५७। यथार्थ.। ठाणा० ३२४। अथशब्दार्थे। बृ० द्वि० १७९ अ। आधाकर्म। बृ० प्र० ८३ अ।

**अहेपन्नगद्धरूवो**-अध पन्नगार्द्धरूपः, अधस्तनं यत्पन्नगस्यार्द्ध तस्येव रूपमाकारो यस्य स, अध पन्नगार्द्धवदतिसरलो दीर्घश्च। जीवा० २०६। अध-अधस्तनं यत्पन्नगस्यार्द्ध तस्येव रूपम्-आकारो यस्य स। जीवा० ३६१।

**अहेऊहिं**- अहेतुभि, क्रियावाद्यादिपरिकल्पितकुहेतुभि। उत्त० ४४९।

**अहेवाए**-अधोवात, योऽध उद्गच्छन् वाति वात स.। जीवा० २९।

**अहेविगडे**-अधोविकटे-अव-कुड्यादिरहिते छन्नेऽप्युपरि तदभावेऽपि च। आचा० ३०९।

**अहेवियडं**-पार्श्वतोऽपावृतं गृहम्। बृ० द्वि० १८१ अ।

**अहेसणिज्जे**- यथाऽसावुद्गमादिदोषरहित एषणीयो भवति तथाभूतो दुर्लभ। आचा० ३७६। यथाऽसौ मूलोत्तरगुणदोषरहितत्वेनैषणीयो भवति, तथाभूतो दुर्लभ इति। आचा० ३६८।

**अहेसि**-अभूवम्। आव० १४६। अभूत्। उत्त० ४९६।

**अहो**-अध, अर्वाक्। आव० ८२७। दीणभावे, विम्हए, आमंतणे य। दश० चू० ९६। उदगश्रोतोऽनुकूलम्। नि० चू० तृ० ६३ आ।

**अहोकायं**-अध काय पादलक्षण। आव० ५८७।

**अहोतथा**-अभूत्। उत्त० ४७५।

**अहोधारं**-अहतधारा वर्षा। आव० २९१।

**अहोधिय**- नियतक्षेत्रविषयोऽवधिस्तद्रूप ज्ञानदर्शनम्। ठाणा० ४७३।

**अहोरत्ता**-अहोरात्रा-त्रिंशन्मुहूर्त्तप्रमाणा। ठाणा० ८६।

**अहोरत्ते**-अहोरात्रम् । भग० ८८८ ।

**अहोराइयाभिक्खुपडिमा** – अहोरात्रप्रमाणा एकादश भिक्षुप्रतिमा । सम० २१ ।

**अहोलोए**-अधोलोक, तिर्यग्लोकस्याधस्ताल्लोक । प्रज्ञा० १४४ ।

**अहोलोयतिरियलोए**-अधोलोकतिर्यग्लोक, यदधोलोकस्योपरितनमेकप्रादेशिकमाकाशप्रदेशप्रतरं यच्च तिर्यग्लोकस्य सर्वाधस्तनमेकप्रादेशिकमाकाशप्रदेशप्रतरम्, एतद्द्वयमपि । प्रज्ञा० १४४ ।

**अहोवाए**-अधोवात, अध उद्गच्छन् यो वाति वात स । प्रज्ञा० ३० ।

**अहोविहारो**-आश्चर्यभूतो विहार । आचा० १०७ ।

**अहोवेइया** – अधोवेदिका, यत्र जान्वोरधो हस्तौ कृत्वा प्रतिलिख्यते सा । ओघ० ११० । जाणू हेट्ठाओ ह्वितेसु हत्थेसु पडिलेहेति । नि० चू० प्र० १८२ अ ।

**अहोसिरा**-अध शिरस, अधोमुखा । जं० प्र० १५४ ।



## आ

**आंगुल**-व्याक्षिप्त । नि० चू० प्र० ३४७ अ ।

**आंटरगमादि**-वनस्पतिविशेष । नि० चू० द्वि० १५७ अ ।

**आई**-निपात । भग० ६७५ । विस्मयतश्चर्यन्ते । ठाणा० ५२३ । वाक्यालङ्कारे । भग० १७६ । वाक्यालङ्कारार्थे । प्रश्न० ११७ । अलङ्कारे । प्रश्न० १२६ । वाक्यालङ्कारे, अववारणे वा निपात । उपा० २७ । आदि –धर्मस्य प्रथमा प्रवृत्ति । जीवा० २५५ । गणितप्रक्रियाया आदि (अगाकसख्यान्यास) । सूत्र० ९ । यस्मात्परमस्ति न पूर्वम् । अनु० ५४ । स्वभेद । अनु० ३४ ।

**आइंखिणिया**-डोम्बी तस्या कुलदेवतं घटीकयक्षोनाम स प्रष्ट सन् करणे कथयति, सा च तेन शिष्ट-कथित सदन्यस्मै कथयति, घटीय मित्ति परिकहेइ । बृ० प्र० २१५ अ ।

**आइअत्ती**-सार्धचिन्तक । बृ० तृ० २४९ अ ।

**आइक(ग)रे**-आदिकर, आदौ–प्रथमत श्रुतधर्मम्–आचारादिग्रन्थात्मकं करोति–तदर्थप्रणायकत्वेन प्रणयतीत्येवंशील. । भग० ७ ।

**आइक्खंति**-आख्यान्ति, सामान्यत कथयन्ति । भग० ९८ । ईषद् भाषन्ते । ठाणा० १३६ । आचक्षते । आचा० १७८ ।

**आइक्खगा**-आख्यायका, शुभाशुभकथका । जं० प्र० १४२ । य शुभाशुभमाख्याति । प्रश्न० १४१ ।

**आइक्खणं**-सहितोच्चारणम् । बृ० तृ० २५ अ ।

**आइक्खिए**-मातंगविद्या यदुपदेशादतीतादि कथयन्ति डोम्ब्यो वधिरा इति लोकप्रतीता । ठाणा० ४५१ ।

**आइगर**-आदिकर, ऋषभनामा भगवान् । उत्त० ६२० ।

**आइच्च** – आदित्य, अर्चिमालिविमानवासी द्वितीयो लोकान्तिकदेव । भग० २७१ । आदित्यमासो येन कालेनादित्यो राशिं भुंक्ते । सम० ५६ । आदित्य । आव० १३५ । सूर्य० २९२ ।

**आइच्चजसाई**-आदित्ययश प्रभृति । नन्दी २४२ ।

**आइच्चजसे**-आदित्ययशा, भरतचक्रिपुत्र । ठाणा० ४३० ।

**आइच्चपेढं**-आदित्यपीठम् । आव० १४६ ।

**आइच्चसंवच्छरे**-आदित्यसवत्सर, युगभाविसंवत्सरविशेष । सूर्य० १६८ । 'पुढविदगाण' मित्यादिलक्षण सवत्सरविशेष । सूर्य० १७१ ।

**आइज्ज**-आदेय –रम्य । प्रश्न० ८३ ।

**आइज्जा**-आदेया, दर्शनपथमुपगता, उपादेया सुभगा च । जीवा० २७१ ।

**आइट्ठं**-विशिष्टम् । बृ० तृ० ६६ अ । आविष्टा–अधिष्ठिता । ठाणा० ३२८ ।

**आइ(य)ड्ढि** – आत्मर्द्धि, आत्मशक्ति, आत्मलब्धिर्वा । भग० १०७, ४९२ ।

**आइणग**-चर्ममयं वस्त्रम् । जं० प्र० ३६ । मृगकादिचर्मनिष्पन्नानि । आचा० ३९४ ।

**आजिनकं**-चर्ममयो वस्त्रविशेष । भग० ५४० ।

**आइण्णं** – आकीर्णम्, समन्तान्निक्षिप्तम् । भग० १५३ । सम्बाधन स्त्रीस्पर्शादिदोषा. । ओघ० ४८ । आचीर्णम् । नि० चू० द्वि० १५७ अ । भावितकुलम् । बृ० प्र० २७० अ ।

**आइण्णंतो**-प्रोतयन् । आव० ४२७ ।

**आइण्णपोग्गलं**-जं काकमाणादीहिं अणिवारियत्तिण्णकिण (मास) णिज्जति । नि० चू० तृ० ७२ अ ।

**आइण्णा**-आकुला । नि० चू० प्र० १८६ अ । माधूण कारणिज्जा । नि० चू० प्र० १८६ अ । सकुला । आचा० ३३१ ।

**आइण्णे**–षष्ठाङ्गे सप्तदश ज्ञातम्। उत्त० ६१४। सम० ३६।

**आइण्णो**–आकीर्ण, गुणैर्व्याप्त·। जीवा० २७०। जात्य। औप० ७१। खित्तमिव खलियं गुणेहिं जयविजयाईहिं आपूरिओ, अस्सो जातिरेव वा। दश० चू० १६५।

**आइद्ध**–आरब्ध। (मर०)। आदिग्ध, आलिङ्गित। प्रश्न० ४१। आविद्ध, प्रेरित·। आव० ६०२।

**आइन्नं**–आचीर्णम्, आसेवितम्। आचा० ५। आयरियपरंपरएण वालुकलाओ आदिण्ण णिम्मीसोवक्खड आसेवित त आइन्न। नि० चू० द्वि० १५७ आ। आत्मीयात्मीयाऽऽवासमर्यादानुलघनेन व्याप्ता। भग० ३७। कल्प्यम्। पिण्ड० १६५। आकीर्णम्–राजकुलसङ्कुल्यादि। दश० २८०।

**आइन्नवर**–जात्यप्रधान। भग० ३२२, ४८१।

**आइन्नसंलिक्खं**–स्त्र्यादिचित्राकीर्णं। आचा० ३८१।

**आइन्ना**–आकीर्णानि, गुणवन्ति। ज० प्र० २३२।

**आइन्ने**–आकीर्ण, आकीर्यते–व्याप्यते विनयादिभिर्गुणैरिति जात्यादिगुणोपेत। उत्त० ३४९। व्याप्त। उत्त० ३४८।

**आइन्नो**–आकीर्ण, सङ्कीर्ण, गुणव्याप्तो मनुष्यजन। औप० २। विनीत। उत्त० ४८। आचार्यगुणैराचारश्रुतसपदादिभिर्व्याप्त·–परिपूर्ण। उत्त० ५५०।

**आइमउ**–आदिमृदु, प्रथमत कोमलम्। अनु० १३१।

**आइमूल**–वृक्षादिमूलोत्पत्तावाद्यं कारणम्। आचा० ८७।

**आइयणं**–अदनं, भक्षणम्। आचा० ७२६। व्य० प्र० १८० अ। भोजनम्। बृ० द्वि० १२६ आ। समुद्देगनम्–भोजनम्। बृ० तृ० ४ आ। आपानम्। बृ० द्वि० ३४ अ। ठाणा० ३३१। भूय प्रत्यापिबति। बृ० तृ० १८५ आ।

**आइयंति**–आददति, गृह्णन्ति, बध्नन्तीत्यर्थ। ठाणा० ३२०।

**आइयति**–आदत्ते। उत्त० १९८।

**आइलं**–आविलम्–गडुलम्। जीवा० ३५०।

**आइलचंदसहिय**–उद्दिष्टचन्द्रसहित। सूर्य० २८०।

**आइसुए**–आदिश्रुत, सामायिकादिश्रुत। बृ० प्र० ३८ आ।

**आइसुयं**–पञ्चमङ्गलम्। बृ० तृ० २४९ आ।

**आइस्सइ**–आविश्यते–अधिष्ठीयते। भग० ७४९।

**आई**–आदि·, ससार, धर्मकारणाना वाऽऽदिभूत शरीरम्। सूत्र० १६२। सामीप्यम्, व्यवस्था, प्रकार, अवयवश्च। प्रश्न० ७। निवेश। औप० ५।

**आईए**–आतीत·, आ–समन्तादतीव इतो–गतोऽनाद्यनन्ते ससारे। आचा० २८५।

**आईणं**–आजिनकम्, चर्ममयं वस्त्रम्। जीवा० १९२।

**आईणगं**–आजिनकम्, चर्ममयं वस्त्रम्। जीवा० २१०। औप० ११। जं० प्र० ५५। ज० प्र० १०७। निरया० १।

**आईय**–आ समन्तादतीव इतो–गतोऽनाद्यनन्ते ससारे भ्रमणम्। आचा० २८६।

**आईयट्ठ**–आ–समन्तादतीव इता –ज्ञाता परिच्छिन्ना जीवादयोऽर्था येन सोऽयमातीतार्थ आदत्तार्थो वा, यदिवाऽतीता –सामस्त्येनातिकान्ता अर्था –प्रयोजनानि यस्य स तथा, उपरतव्यापार। आचा० २८६।

**आउं**–वैद्यकम्। आव० ६६०। भवस्थितिहेतव कर्म्मपुद्गला। आचा० १०२।

**आउंटणं**–आकुञ्चनम्, गात्रसङ्कोचलक्षणम्। आचा० ५७४।

**आउंटणपसारणं**–आकुञ्चनप्रसारणम्। आव० ८५३।

**आउंटियं**–सकोचितम्। भग० ६३१।

**आउ**–आयु, स्थिति। भग० २३६। उताहो। बृ० प्र० २५० अ। एति–उपक्रमहेतुभिरत्तपवर्त्यतया यथास्थित्यैवानुभवनीयता गच्छतीति। उत्त० ३३५। जीवित। ठाणा० १०८। आयु·, कर्म्मविशेष। ठाणा० २२०।

**आउकाए**–अप्काय, पूर्वसमुद्र, पश्चिमसमुद्रो वा। सूर्य० ४७।

**आउक्खपणं**–आयु·क्षयेण, आयु·पूर्णीकरणेन। आचा० ४२१।

**आउखेम**–आयुक्षेम–आयुष सम्यक पालनं। आचा० २९०। जीवित। आचा० २९१।

**आउज्जं**–आतोद्यम्, वादित्र, मृदंगादि। आव० ५२८। पटहभेरीवशवीणाझल्लर्यादीनि। आचा० ६१।

**आउज्जंगं**–आतोद्याङ्गम्, आतोद्यकारणम्। उत्त० १४३।

**आउज्जिय**–आयोगिक, उपयोगवान, ज्ञानी। भग० १४०।

**आउज्झिया**-आयोजिका, आ-मर्यादया केवलिदृष्टया योजन-शुभाना योगाना व्यापारणम्। प्रज्ञा० ६०४।

**आउज्झियाकरणं**-आयोजिकाकरणम्। प्रज्ञा० ६०४।

**आउज्जीकरणं**-आवर्जीकरणम्, उदीरणावलिकाया कर्म-प्रक्षेपव्यापाररूपम्। औप० ११०। आवर्जितकरणम्। प्रज्ञा० ६०४।

**आउज्जो**-आवर्ज, आत्मानं प्रति मोक्षस्याभिमुखीकरणं-आत्मनो मोक्षं प्रत्युपयोजनमिति, अथवा आवर्ज्यते-अभि-मुखीक्रियते मोक्षोऽनेनेति वा-शुभमनोवाक्कायव्यापारविशेष.। प्रज्ञा० ६०४।

**आउट्ट**-आकुट्टम्, आलजालम्। उत्त० १४६। आवर्जित। बृ० द्वि० ३४ आ।

**आउट्टइ**-आवर्त्तते, प्रवर्त्तते। भग० २८९।

**आउट्टणं**-आकम्पनम्। बृ० तृ० ८५ अ।

**आउट्टणया**-आवर्त्तना, आवर्त्तते-ईहातो निवृत्यापायभावं प्रत्यभिमुखो वर्त्तते येन बोधपरिणामेन स', तद्भाव', अपा-यपर्याय.। नन्दी १७६।

**आवट्टति**-निवर्त्तते। सूत्र० १९०। आवर्त्तते-निवर्त्तते तमा-लोचयतीत्यर्थ'। ठाणा० १३९। करोति। नि० चू० प्र० २५६ अ।

**आउट्टा** - आराधिता। बृ० द्वि० ११२ अ। आवर्जिता। ओघ० १५९।

**आउट्टामो**-प्रवर्त्तामहे। आचा० ३३१।

**आउट्टावेज्ज**-अभिमुखयेत्। आचा० ३६४।

**आउट्टिआए**-आकुव्या-उपेत्य। सम० ३९।

**आउट्टिज्जमाणं** -आकोट्यमानम्, सङ्कोच्यमानम्। सूत्र० २९८।

**आउट्टि**-उपेत्य। व्य० प्र० १६ आ।

**आउट्टिय**-ज्ञात्वा। आव० ७५८। उत्तमार्थकृत आहार। नि० चू० द्वि० ५७ आ।

**आउट्टिया**-आउट्टिया नाम आभोगो जानान इत्यर्थ। नि० चू० द्वि० ५९ आ। आवर्जिता। बृ० द्वि० १८६ आ।

**आउट्टी**-समाधानम्। बृ० तृ० १२३ आ।

**आउट्टे** - कर्त्तुमभिलषेत्। आचा० ४१७। निवर्त्तयेत्। आचा० १११। आवर्त्तयेत्-अनुकूलयेत। व्य० द्वि० २८२ आ। आवृत्त.-व्यवस्थित। आचा० २७९। सम-न्तात् व्यवस्थित'। आचा० २७९।

**आउट्टेउं**-आवर्ज्य। बृ० तृ० ३४ अ।

**आउट्टो**-व्यावृत्त.। उत्त० ३३२। आवर्जित। हृष्ट'। उत्त० ३३२। स्वस्थ। उत्त० ३५५। आव० २२०। उत्त० १०८। आवृत्त। आव० ५७८, २९४, ५३६ २८७। उत्त० ३२४। आवर्जित। आव० ४१२।

**आउडिज्जमाण**-'जुड' बन्धने, इतिवचनाद् 'आजोड्य-मानेभ्य' आसम्बध्यमानेभ्यो मुखहस्तदण्डादिना सह शङ्ख-पटहझल्लर्यादिभ्यो वाद्यविशेषेभ्य आकुट्यमानेभ्यो वा एभ्य एव ये जाता शब्दास्ते, आजोड्यमाना आकुट्यमाना एव वोच्यन्ते, अतस्तानाजोड्यमानानाकुट्यमानान् वा शब्दान् शृणोति, इह च प्राकृतत्वेन शब्दशब्दस्य नपुंसकनिर्देश., अथवा आकुट्यमानानि-परस्परेणाभिहन्यमानानि। भग० २१६।

**आउडेइ**-आजुडति, सम्बद्ध करोति, लिखति। जं० प्र० २५०। आकुट्टयति, ताडयति। जं० प्र० २२४। आकु-ट्टयति। भग० १७३।

**आउत्त**-आयुक्तम्, उपयोगपूर्वकम्। भग० १८४। सम्यक् प्रवचनमालिन्यादिरक्षणतया। प्रज्ञा० २६८। उपयुक्त। ठाणा० ४०९। प्रयत्नपरो मरणाराधनयुक्त। उपयुक्त। ओघ० २०२। उपयोगतत्परम्। ओघ० १७६। आयुक्त। व्य० द्वि० २६६ अ।

**आउत्तगो**-आवर्त्तक। उत्त० ३०४।

**आउत्तियं**-आयुक्तिकम्। उत्त० ११९।

**आउत्तो**-आयुक्त, व्यवस्थित। दश० २२६।

**आउय**-आयुष्कम्, जीवितम्। आव० ३४१। आयुष्क-काल, देवाद्यायुष्कलक्षण। आव० २५७।

**आउयकम्मस्स गालणा**-आयु कर्मणो गालन, प्राणवधस्य द्वादश पर्याय। प्रश्न० ५।

**आउयकम्मस्स णिट्ठवणं**-आयु कर्मणो निष्ठापनम्, प्राण-वधस्य द्वादश पर्याय.। प्रश्न० ५।

**आयुकम्मस्स भेय** - आयु कर्मणो भेद', प्राणवधस्य द्वादश पर्याय। प्रश्न० ५।

**आउयकम्मस्स संवट्टगो**-आयु कर्मण सवर्त्तक, प्राण-वधस्य द्वादश पर्याय। प्रश्न० ५।

**आउयकम्मस्सुवद्दवो**–आयु कर्मण उपद्रव, प्राणवधस्य द्वादश पर्याय। प्रश्न० ५।

**आउयबंधद्धा**–आयुर्बन्धाद्धा। प्रज्ञा० ४८९।

**आउयसंवट्टए**–आयु सवर्तक–आयुरुपक्रम.। ठाणा० ६७।

**आउर**–आतुर, शरीरसमुत्थेनागन्तुकेन वा व्रणेन ग्लान। दश० २७०। क्षुधा पिपासया वा पीडित। व्य० प्र० २३ आ। दृष्टान्त। नि० चू० प्र० २०२ आ। आतुर, क्वचिदपि स्वास्थ्यमलभमान सन् आकुल। जीवा० १२२। आतुर–दुस्थ'। भग० ७०५। ग्लाने सति प्रतिजागरणार्थं (प्रतिसेवा)। ठाणा० ४८४। अत्यन्ताकुलतनु,। उत्त० ८६। कामेच्छाऽन्धा'। आचा० २३८। प्रतिसेवनाभेदं'। भग० ९१९। आतुर,, चिकित्साया अविषयभूत'। विपा० ७६। चिकित्साया अविषयभूतो रोगी। बृ० प्र० २८१ आ। मर्त्तुकाम। उत्त० २७३।

**आउरपच्चक्खाण** – नोपूर्वश्रुतप्रत्याख्यानभेद'। विशे० १३२०। प्रकीर्णकनाम। आव० ८०४। श्रुतप्रत्याख्यानम्। आव० ४७९। अस्वास्थ्यमना। आचा० ७२। आतुर–चिकित्साक्रियाव्यपेत तस्य प्रत्याख्यानवर्णनम्'। नंदी २०६। अपूर्वश्रुतप्रत्याख्यानम्। आव० ४७९।

**आउरसरणं**–आरोग्गसाला। दश० चू० ५१।

**आउरस्सरण**–आतुरशरणम्, दोषातुराश्रयदानम्। दश० ११८। आतुरस्मरणम्, क्षुधाद्यातुराणा पूर्वोपभुक्तस्मरण चानाचरितम्। दश० ११७।

**आउरीभूएहिं**–आकुलीभूतै, आतुरीभूतै। बृ० प्र० ३९अ।

**आउल**–आकुलम्। व्यग्रम्। आव० ५८५। प्रचुरम्। भग० ९५। आकुल, स्कंध। विशे० ४२६। गड्डुल, आविल वा। सम० ५३।

**आउलगमणं**–आकुलगमन–एकत्र मिलिता गच्छन्ति। ओघ० १२६।

**आउलमाउलं**–आकुलाकुलम्, स्त्र्यादिपरिभोगविवाहयुद्धाग्निसर्पणनानाप्रकारम्। आव० ५७४।

**आउला**–आकुला, त्वरमाणा। बृ० द्वि० ६५ अ।

**आउलाकुल**–आकुलाकुल, अतिव्याकुल। प्रश्न० ५०।

**आउली**–तडवडावृक्ष। जीवा० १९१।

**आउलो**–आकुल, अभिभूत। आव० ५८९।

**आउसं** – आयु–जीवित तत्सयमप्रधानतया प्रशस्तं प्रभूत वा विद्यते यस्यासावायुष्ममास्तस्यामन्त्रणम्। ठाणा० ७।

**आउसंत**–आयुष्मान्, चिरजीवी। दश० १३७। आवसन् गुरुमूलमावसन् वा। दश० १३७।

**आउसंतेणं**–आजुषमाणेन, श्रवणविधिमर्यादया गुरून् सेवमानेन। उत्त० ८०। भगवतेत्यस्य विशेषणमायुष्मता–चिरजीवितवता। सम० २। श्रवणविधिमर्यादया गुरूनासेवमानेन। ठाणा० ९। आयुष्मदन्ते, आयुष्मता। नंदी २१२। आजुषमाणेन–प्रीतिप्रवणमनसा। सम० २। हे आयुष्मन्। सम० २। नंदी २१२। आमृशता–गुरुक्रमयुगल संस्पृशता। सम० २। गुरुमूलमावमता। दश० १३७। आवसता गुरुकुले। सम० २। आयुष्मन्, शिष्यामन्त्रणम्। उत्त० ८०।

**आउसंवट्टणं** आयुरुपक्रम। नि० चू० प्र० २७४ अ।

**आउसणाहिं** – आक्रोशना मृतोऽसि त्वमित्यादिभिर्वचनै'। भग० ६८३।

**आउसेइ**–आक्रोशयति, शपति। भग० ६८३।

**आउसो**–आयुष्मन्, पुत्रादेरामन्त्रणम्'। भग० १३५।

**आउस्स**–आक्रोश, असभ्यवचनरूप। सूत्र० ९३।

**आउस्सियकरणं** – आवश्यककरणम्, आवर्जिकरणम्। प्रज्ञा० ६०४।

**आउहं**–आयुधम्, क्षेप्यं शस्त्रम्। प्रश्न० ४७। अक्षेप्यम्। विपा० ४६। खेटकादि। जीवा० २५९। क्षेप्यास्त्रम्। भग० १९४। शस्त्रम्, अथवाऽऽयुधं–अक्षेप्यशस्त्रं खड्गादि। भग० ३१८।

**आउहसाला**–आयुधशाला–शस्त्रागारम्। आव० १४८।

**आऊ**–आयु, एति–आगच्छति प्रतिबन्धकता स्वकृतकर्मबद्धनरकादिकुगतेर्निष्क्रमितुमनसो जन्तोरिति। अथवा आ–समन्तादेति–गच्छति भवाद् भवान्तरसङ्क्रान्तौ विपाकोदयमिति वा। प्रज्ञा० ४५४।

**आए**–अनन्तकाय–कुहणविशेष। प्रज्ञा० ३३। आत्मना। ठाणा १३९।

**आएस**–प्राघूर्णक। ओघ० ६७। निर्देश। नि० चू० प्र० १९ आ। प्राघूर्णक आयात.। ओघ० १०१। आज्ञा। नि० चू० प्र० २८५ आ। आदेश–कृत्रिमकृत-भ्रकुटीभङ्गादय। आचा० ९१। प्राघूर्णक। आचा०

१२९, ३५२। कर्मकरादि। आचा० ४१५। व्यापारनियोजना। आचा० ३१८। दृष्टान्त। आचा० २६२। आदिश्यते इत्यादेश आचार्यपारम्पर्यश्रुत्यायातो वृद्धवादो, यमैतिह्यमाचक्षते। आचा० २६२। वृद्धवाद। आचा० २६३। प्राघूर्णक.। ठाणा० १२८। उपचारो, व्यवहारः (देशे प्रधाने च)। ठाणा० २२३। एतद्भविष्यतीत्यादिनिर्णय। उप० मा० गा० ११५। आदेश, विशेष., आङिति मर्यादया विशेषरूपानतिक्रमात्मिकया दिश्यते-कथ्यत इति। उत्त० ३२। प्राघूर्णकसाधुः। आव० २६३। प्राघूर्णक। ओघ० १८३। आदेश.-प्रकार सामान्यविशेषरूपस्तत्र चादेशेन-ओघतो द्रव्यमात्रतया न तु तद्गतसर्वविशेषापेक्षयेतिभाव, अथवा आदेशेन-श्रुतपरिकर्म्मिततया। भग० ३५७। आदेश', कथनम्। उत्त० १४७। सखडिविषयो दृष्टान्त। बृ० द्वि० १३५ आ। उपचार। विशे० १३१५। प्राघूर्णक। नि० चू० प्र० १४ आ। पाहुण्णकं। नि० चू० प्र० २९३ आ। प्राघूर्णक। बृ० द्वि० १९५ अ। प्रायश्चितप्रकार। बृ० द्वि० ९८ आ। सूत्रमुच्यते। विशे० २३१। आदेशो नाम ज्ञातवस्तुप्रकार। स च द्विविध.-सामान्यप्रकारो विशेषप्रकारश्च। विशे० २३०। असत्यार्थादेश। प्रश्न० १७। विष्यन्तरम्। दश० १३। व्यपदेश। आचा० ७४। अभ्यर्हित प्राहुणकम्। उत्त० २७२। अधिकार। बृ० प्र० २७६ आ। प्रकार.। विशे० ९२२। अनुज्ञा। व्य० द्वि० ३४६ अ। उपचार', व्यवहार., स च बहुतरे प्रधाने वाऽऽदिश्यते। ठाणा० २२३। नयान्तरविकल्प। व्य० द्वि० ३५४ आ। आदिश्यते-आज्ञाप्यत इत्यादेश-कर्मकरादि.। आचा० ४१५।

**आएसणं**-आवेशनं, अयस्कारकुंभकारादिस्थानम्। औप० ६१।

**आएसणाणि**-आदेशनानि-लोहकारादिशाला.। आचा० ३६६।

**आएसपर**-आदेश-कर्म्मकरादि स चासौ परश्चादेशपर। आचा० ४१५।

**आएसा**-आदेश, प्रतिवचनमुत्पादव्ययध्रौव्यवाचकं पदत्रयम्। विशे० २९८।

**आएसात्रि**-आगमिष्या। सूत्र० ७६।

**आएसियं**-आदेशम्, विभागौद्देशिकतृतीयभेद। पिण्ड० ७९।

**आओ**-आय, प्राप्ति। विशे० ४५०। उताहो। बृ० द्वि० ७ अ। भाग। आव० ३४२। लाभ, उपादानं, हेतु। विशे० ५४३। ज्ञानादिनामायहेतुत्वादध्ययनम्। ठाणा० ६। भूमिस्फोटकविशेष। आचा० ५७।

**आओग**-आयोग, द्विगुणादिवृद्धया अर्थप्रदानम्। भग० १३५। द्विगुणादिवृद्धयर्थं प्रदानम्। जं० प्र० २३२। अर्थलाभ। औप० १२। अर्थोपाय यानपात्रोष्ट्रमण्डलिकादि। सूत्र० ४०७। परिकर। औप० ६३।

**आओगपओगसंपउत्ताइं** आयोगेन - द्विगुणादिलाभेन द्रव्यस्य प्रयोग-अधमर्णाना दानं तत्र सम्प्रयुक्तानि-व्यापृतानि तेन वा सम्प्रयुक्तानि-सङ्गतानि तानि। ठाणा० ४२२। आयोगो-द्विगुणादिवृद्धयाऽर्थप्रदानं, प्रयोगश्च-फलान्तर तौ सप्रयुक्तौ-व्यापारितौ यैस्ते। भग० १३५।

**आओगपयोगसंपउत्ते** -आयोगप्रयोगा'-द्रव्यार्जनोपायविशेषा सप्रयुक्ता-प्रवर्तिता येन। ठाणा० ४६३।

**आओडावेइ**-आखोटयति, प्रवेशयति। विपा० ७२।

**आओसे**-प्रदोषे। ओघ० ७६।

**आओसेज्जा**-आक्रोशयेत्। उपा० ४२।

**आओहणं**-आयोधनम्, (युद्धम्)। ठाणा० ४०२।

**आकंदियं**-आक्रन्दितम्, ध्वनि.विशेषकरणम्। प्रश्न० २०।

**आकंपइत्ता**-वैयावृत्त्यादिभि आकम्प्य-आवर्ज्य। ठाणा० ४८४। यदालोचनाऽऽचार्यं वैयावृत्यकरणादिनावर्ज्य यदालोचनम्। भग० ९१९।

**आकट्टविकट्टिं**-आकर्षवैकर्षिकाम्। भग० ६८५।

**आकट्टिं**-आकृष्टिं। भग० ६८३।

**आकड्ढविकड्ढिं करेइ**-आकट्टविकट्टिं करोति, आकर्षविकर्षिका करोति। भग० १६७।

**आकरणम्** - आगरण, आह्वानम्। ओघ० २०४।

**आकाशम्** आङिति सर्वभावाभिव्याप्त्या काशत इति। उत्त० ६७२। सर्वभावावकाशनात्, आ-मर्यादया काशन्ते-दीप्यन्ते पदार्थसार्था यत्र तत्। आ-अभिविधिना काशन्ते-दीप्यन्ते पदार्था यत्र तत्। अनु० ७४। आङिति मर्यादया-स्वस्वभावापरित्यागरूपया काशन्ते-स्वरूपेण प्रतिभासन्ते तस्मिन्पदार्था इति। उत्त० ६७२। बृ० प्र० ९१ अ।

**आकाशगा** - आकाशगा, भूतविशेषा। प्रज्ञा० ७०।

**आकासाहि**–आकर्षय । आचा० ३७८ ।
**आकासिद्द**–खाद्यविशेष । जं० प्र० ११८ ।
**आकिण्णं**–अतिकीर्णे । नि० चू० तृ० १३ अ ।
**आकुट्टि**–हिंसा । आचा० ३०५ ।
**आकुट्टिय**–उत्पेल्य । बृ० तृ० १२२ आ ।
**आकुल**–आकुल, व्याप्त° । जं० प्र० १८८ ।
**आकूतम्**–अभिप्रेतम् । विशे० ८८५ ।
**आकुष्टिविकुष्टि** । व्य० प्र० ९४ आ ।
**आकेवलिआ**–आकेवलिकाः, न केवलं अकेवलम्, तत्र भवा आकेवलिका –सद्वन्द्वा –सप्रतिपक्षा इतियावत् असम्पूर्णा वा । आचा० २४१ ।
**आकोट्टिमं** – आकुट्टिकं यथा रूप्यकोऽधस्तादपि उपर्यपि मुख कृत्वाऽऽकुट्यते । दश० ८६ ।
**आकोडनं**–आकोटनम्, कुट्टनेनाङ्गे प्रवेशनम् । प्रश्न० ५७ ।
**आकोडेमाणे** – आउडेमाणे, आकुट्यमानम्, आहन्यमानम् । भग० २५१ ।
**आकोसायंतं**–आकोशायमानम्, विकचीभवत् । जीवा० २७१ । जं० प्र० १११ ।
**आक्षोधुका**–क्षुधा रहिता । दश० १२७ ।
**आख्यातिकम्**–क्रियाप्रधानत्वात् धावतीति । अनु० ११३ ।
**आख्यायिकास्थानानि** – अक्खाइयठाणाणि, कथानकस्थानानि । आचा० ४१३ ।
**आगंतागारं**–गामपरिसट्ठाण, आगंतागार–वहिया वासो । नि० चू० प्र० १८३ अ । आगन्तुकानां कार्पटिकादीनामगारमागन्तागारम् । सूत्र० ३९३ । ग्रामादेर्बहिरागत्यागत्य पथिकादयस्तिष्ठन्ति । आचा० ३६५ ।
**आगंतार**–यत्रागारिण आगत्य तिष्ठन्ति तदागन्तुकागारम् । बृ० तृ० ४८ आ । प्रस्तायाता आगत्य वा यत्र तिष्ठन्ति तदागन्तारम्, तत्पुनर्ग्रामान्नगराद्वा बहि स्थान तत्र । आचा० ३०७ । आगन्तागारम् ( धर्मशाला ) । आचा० ३०६ । पत्तनाद्बहिर्गृहम् । आचा० ३४८ ।
**आगंतु**–आगन्तुक -पथिकादिरगारस्थजनो यत्रागत्य सन्तिष्ठते । बृ० द्वि० १७९ आ ।
**आगंतुओ**–आगन्तुक°, कण्टकादिप्रभव. । आव० ७६४ ।
**आगंतुगो**–आगामुक । आव० २७० । आगंतुएण सत्थातिणाकओ जो मो । नि० चू० प्र० १८८ आ ।
**आगंतुय**–आगन्तुकः । दश० १०८ ।
**आगंतू**–आगन्तुकः । उत्त० ११३ ।
**आगंपिया**–वशीकृता । नि० चू० द्वि० ९७ अ ।
**आगइ**–आगति°, प्रत्यावृत्त्या–प्रातिकूल्येनागमनम् । आव० २८१ । प्रज्ञापकप्रत्यासन्नस्थाने आगमनम् । ठाणा० १३३ ।
**आगम** – आगमनम्–आगम.–आ–अभिविधिना मर्यादया वा गम°-परिच्छेद इति । आव० २६ । आचार्यपारम्पर्येणागतः, आप्तवचनं वा । अनु० ३८ । आगम्यन्ते–परिच्छिद्यन्ते अर्था अनेनेति, केवलमन.पर्यायावधिपूर्वचतुर्दशकदशकनवकरूपः । ठाणा० ३१७ । सूत्रार्थोभयरूपः । आव० ५२४ । आगम्यन्ते–परिच्छिद्यन्ते अर्था अनेन इति आगमः–आप्तवचनसम्पाद्यो विप्रकृष्टार्थप्रत्यय । ठाणा० २६२ । गुरुपारम्पर्येणागच्छतीति आगम°, आ–समन्ताद्गम्यन्ते–ज्ञायन्ते जीवादय पदार्था अनेनेति वा । अनु० २१९ । आप्तप्रणीतः । आचा० ४८ । (आगमसिद्ध°) । ठाणा० २५ । सूत्रम् । आव० ६०४ । श्रुतपर्याय । विशे० ४१६ । अध्ययनम् । आव० ३०० । आगम, प्राप्ति । दश० १६ । सङ्ग्रहम् । बृ० प्र० ३२ आ । अर्थपरिज्ञानम् । व्य० प्र० २५१ आ । आ–अभिविधिना सकलश्रुतविषयव्याप्तिरूपेण मर्यादया वा यथावस्थितप्ररूपणारूपया गम्यन्ते – परिच्छिद्यन्तेऽर्था येन स । नंदी २४९ । आगच्छति गुरुपारम्पर्येणेत्यागम । भग० २२२ । आगम° । विशे० ४३२ ।
**आगमकुसला**–आगम°–श्रुतिस्मृत्यादिरूपस्तस्मिन् कुशलावागमकुशलौ । उत्त० ५२१ ।
**आगमणं**–प्रयोजनपरिसमाप्तौ पुनर्वसतिं गमनम् । आव० ५७३ । आकसण । नि० चू० तृ० ६३ आ ।
**आगमणगिहं** – सभाप्रपादेवकुलादिपथिकस्थानम् । बृ० द्वि० १७९ आ । आगमनगृह–सभाप्रपादि, पथिकादीनामागमनेनोपेत, तदर्थं वा गृहम् । ठाणा० १५७ ।
**आगमतः**–आगममाश्रित्य (ज्ञानापेक्षयेत्यर्थ ) । अनु० १४ ।
**आगममाणे** – आगमयन्–आपादयन् । आचा० २७८ । २८३ । अवगमयन, बुध्यमान । आचा० २४५ ।
**आगमववहारी**–आगमववहारी,छव्विहे–केवलणाणी ओहीणाणी मणपज्जवणाणी चोद्दसपुव्वी अभिण्णदसपुव्वी णवपुव्वी य । नि० चू० तृ० १०० अ । आगमव्यवहारिण,

**आयरियव्वं**–पटियव्व। नि० चू० प्र० ५ आ।

**आयवणाम**–आतपनाम-यदुदयात् जन्तुशरीराणि स्वरूपेणानुष्णान्यपि उष्णप्रकाशलक्षणमातप कुर्वन्ति तदातपनाम, तद्विपाकश्च भानुमण्डलगतेषु पृथिवीकायिकेष्वेव न वह्नौ, प्रवचनेऽपि निषेधात्, तत्रोष्णत्वमुष्णस्पर्शनामोदयात्, उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वम्। प्रज्ञा० ४७३।

**आयरिया**–आचार्या –प्राणाचार्या वैद्या । उत्त० ४७५। व्य० प्र० १७१ अ।

**आयरिसो**–आदर्श.। आचा० ५।

**आयरेणं**–आदरेण, प्रयत्नेन। जं० प्र० १९२।

**आयरो** – आदरः, आद्रियते आदरणं वा, परिग्रहस्याष्टमं नाम। प्रश्न० ९२। सम्भ्रम । बृ० तृ० ११ अ।

**आर्य**–अज्ज, पितामह.। व्य० प्र० १७१ अ। अजुगुप्सीकारी। व्य० प्र० १४ अ।

**आयल्लयं**–गृहम्। पउ० ३३–६६। पराधीनताम्। पउ० २४–१५।

**आयवं**–आतपवान्, चतुर्विंशतितममुहूर्त्तनामविशेष.। सूर्य० १४६। जं० प्र० ४९१। रविबिम्बजनित उष्णप्रकाश.। उत्त० ५६१। आतप, आ–समन्तात्तपति सन्तापयति जगदिति। उत्त० ३८। घर्म। उत्त० १२१।

**आयवतत्तए**–आतपतप्तं पय । भग० ६८०।

**आयवत्ताइं**–आतपत्राणि, छत्राणि। जं० प्र० ८१।

**आयवाइ**–विश्वकारणात्मवादिन । आव० ८१६।

**आयवाई**–आरमवादिन, क्रियावादिविशेष । सम० ११०। 'पुरुष एवेद ग्नि' मित्यादि प्रतिपत्तुरिति। ठाणा० २६८।

**आयवाभा** – आतपाभा, सूर्यस्य ज्योतिषेन्द्रस्य द्वितीया अग्रमहिषी। जीवा० ३८५। सूर्यस्य पत्नीनाम। भग० ५०५।

**आयवी** – आत्मवित्, आत्मानं श्वभ्रादिपतनरक्षणद्वारेण वेत्तीति। आचा० १५४।

**आयवीरियं**–वीर्यस्य पञ्चमभेद । नि० चू० प्र० १९ अ।

**आयसंचेयणिज्जा** – आत्मना सचेत्यन्ते–क्रियन्त इति आत्मसचेतनीया (घट्टन–पतन–स्तभन–श्लेषजन्या उपसर्गा)। ठाणा० २८०।

**आयसंचेयतो**–आत्मसचेतनीयः–आत्मनैवात्मनो दु खोत्पादनम्। व्य० प्र० १९६ अ।

**आयसा**–आत्मना। सूत्र० १०६।

**आयसी**–लोहमयी, दर्भमयी च। प्रश्न० १३।

**आयसंवेणिज्जा**–आत्मसवेदनीया–आत्मना क्रियन्ते ये, उपसर्गा । आव० ४०५।

**आयसरीरसंवेयणी**–आत्मशरीरसवेजनी, संवेजनीकथाया प्रथमोभेदः। दश० ११२।

**आयसरीराणवकंखिया**–स्वशरीरक्षतिकारिणी क्रिया । ठाणा० ४३।

**आयसेण** – आत्मसेन', जंबूद्वीपैरवते अस्यामवसर्पिण्या चतुर्थतीर्थकृत। सम० १५९।

**आया** – आत्मा, जीवः। आचा० १६। आत्मा। भग० १२२। आत्मा, रूपं। नंदी २१२। द्वादशशते आत्मभेदनिरूपणार्थो दशमोद्देशक.। भग० ५५२। अतति–सततमवगच्छति 'अत सातत्यगमन' इति वचनादतो धातोर्गत्यर्थत्वाद्गत्यर्थानां च ज्ञानार्थत्वादनवरतं जानातीति निपातनादात्मा–जीव. उपयोगलक्षणत्वादस्य सिद्धसमार्यव-स्थाद्वयेऽप्युपयोगभावेन सततावबोधभावात्, अतति–सततं गच्छति स्वकीयान् ज्ञानादिपर्यायानित्यात्मा, ससार्यपेक्षया नानागतिषु सततगमनात् मुक्तापेक्षया च भूततद्भावत्वादात्मेति। ठाणा० १०।

**आयाए**–आत्मविराधनादोष.। ओघ० ७९।

**आयाणं**–आदानम्, ईप्सितार्थग्रहणम्। औप० १८। अर्गलास्थान वा। औप० १८। दुष्प्रणिहितमिन्द्रियं। आचा० ३०४। कर्मादानम्। आचा० ३३७। आदीयते–स्वीक्रियते प्राप्यते वा मोक्षो येन तत्, ज्ञानदर्शनचारित्रत्रयम्। सूत्र० ५२। डगलगा। नि० चू० प्र० २२० आ। गहण, जेण मग्गेण गतूण दगमट्टियहरियादीणि घेप्पंति त दगमट्टिय। दश० चू० ७८। कुचादिग्रहणम्, सम्प्राप्तकामस्यकादशो मेद । दश० १९४। आदान –आदीयतेऽनेनेत्यादानो–मार्ग । दश० १६८। इन्द्रियम्, करणम्। भग० २८६। आदीयते–द्वारस्थगनार्थं गृह्यत इत्यादान । जं० प्र० १११। आदीयते– गृह्यते आत्मप्रदेशै सह श्लिष्यतेऽष्टप्रकारं कर्म्म येन तदादानम्, हिंसाद्याश्रवद्वारमष्टादशपापस्थानरूपं वा। आचा० १७०। संयमानुष्ठानं। आचा० १२८। कर्म्मोपादानं। आचा० २४३, ३३०। आदीयते–सावद्यानुष्ठानेन स्वीक्रियते। आचा० १९३। आदि । व्य०प्र० २१८

आ। हिंसायाश्रवद्वारमष्टादशपापस्थानरूपं वा तत्स्थितेर्निमित्तत्वात्कषाया वा। आचा० १७१। आदीयत इति, धनधान्यादि। उत्त० २६५। आदीयत इति आदि – प्रथमम्। उत्त० ५७०। आदीयन्ते–गृह्यन्ते शब्दादयोऽर्था एभिरिति आदानानि–इन्द्रियाणि। बृ० प्र० २११ आ। आदीयते-सद्विवेकैर्गृह्यत इति, चारित्रधर्मे। उत्त० ३३८। आदीयते गृह्यतेऽर्थ अनेनेत्यादानम्–इन्द्रियम्। भग० २२४। आदान, आदेयो रम्य। प्रश्न० ८१। आदीयते–स्वीक्रियते आत्महितमनेनेति–सयम। उत्त० २२५। सम्यग्दर्शनज्ञानचारित्ररूपम्। सूत्र० ४०५।

**आयाणपपण** – आदीयते–प्रथममेव गृह्यत इत्यादानं तच्च तत्पदं चादानपदं तेन आदानपदेन। आचा० १९६।

**आयाणपय** – आदानपदम्, शास्त्रस्याध्ययनोद्देशकादेश्चादिपदम्। अनु० १४१।

**आयाणपरिसाडे**–आधानपरिसाटम्, गर्भाधानपरिसाटरूपमूलकर्मतृतीयभेदः। पिण्ड० १४२।

**आयाणभंडमत्तनिक्खेवणासमिई** – आदानभाण्डमात्रनिक्षेपणासमिति, भाण्डमात्रे आदाननिक्षेपविषया समिति – सुन्दरचेष्टा। आव० ६१६। आदाने–ग्रहणे भाण्डमात्राया - वस्त्राद्युपकरणरूपपरिच्छदस्य, उपकरणस्य वा, भाण्डस्य– वस्त्रादेर्मृन्मयभाजनस्य वा मात्रस्य च–पात्रविशेषस्य निक्षेपणायां–विमोचने ये समिता –सुप्रत्युपेक्षितादिक्रमेण सम्यक् प्रवृत्तास्ते। औप० ३५।

**आयाणरक्खी** – आदानरक्षी, आदीयते–स्वीक्रियते आत्महितमनेनेत्यादान –सयमस्तद्रक्षी। उत्त० २२५।

**आयाणसो**–आदानश.–आदेरारभ्य। सूत्र० ४२४।

**आयाणसोय** – आदानस्रोत, आदीयते – सावद्यानुष्ठानेन स्वीक्रियत इति आदानम्–कर्म्म ससारबीजभूतं तस्य स्रोतासि–इन्द्रियविषया मिथ्यात्वाविरतिप्रमादकषाययोगा वा। आचा० १९२।

**आयाणसोयगढिए** – संसारबीजभूतेन्द्रियविषय मिथ्यात्वादिगृद्ध –अभ्युपपन्न। आचा० १९३।

**आयाणिज्जं**–आदानीयम्–श्रुतं। आचा० १२२। कर्म। आचा० २४२। आदातव्यं भोगाङ्गं, आदानीयं–कर्म आचा० १२२। ग्राह्य, आदेयवचनश्च। आचा० १९१।

**आयाणी**–क्वचिद्देशविशेषेऽजा सूक्ष्मरोमवत्यो भवन्ति, तत्पक्ष्मनिष्पन्नानि आजकानि भवन्ति। आचा० ३९४।

**आयाणीय**–आदानीयम्, ग्राह्यम्। आचा० ३८।

**आयाती**–आयाति, गर्भान्निर्गम। ठाणा० ६७।

**आयापरिणामो** – आज्ञया परिणाम। व्य० द्वि० ४५० अ।

**आयाम** – अवशायनम्। आव० ५४। दैर्घ्यम्। अनु० १८०, १७१। भग० ११९। ठाणा० ६९। आव० १८४। अवश्रावणम्। ओघ० १३३। पिण्ड० १७। आचाम·। ठाणा० ३३९। अवसामणं। नि० चू० प्र० ४७ आ। आचाम्लम्। उत्त० ७०६। उच्चत्वम्। भग० २६९।

**आयामगं**–आयामकम्, अवश्रावणम्। उत्त० ४१९।

**आयामणया**–आकर्षणम्। भग० ९३।

**आयामते**–आयामकम्–अवश्रावणम्। ठाणा० १४७।

**आयामविक्खंभो** – आयामविष्कम्भ। आव० १५०।

**आयामुसिणोदगं**–अवश्रावणमुष्णोदकं च। ठाणा० ३३९।

**आयामे**–आयाम, दैर्घ्यम्। प्रज्ञा० ४२७।

**आयामेति**–ददाति। भग० ६६३।

**आयामेत्ता**–आयामेन समाकृष्य। सूत्र० ३०९। आयम्य, आकृष्य। भग० ९३।

**आयामेत्था**–भोजितवान्। भग० ६६२।

**आयाय**–आदाय, स्वीकृत्य, चरित्वा। उत्त० १२८। अवगम्य। आचा० ३३९। गृहीत्वा मयैतदर्थं यतितव्यमिति निश्चित्य बुद्धया सम्प्रधार्येतियावत्। उत्त० २६८। बुद्धया गृहीत्वाऽभ्युपगम्य। उत्त० २५३। गृहीत्वा, अवगम्य। आचा० ३३५। बुद्धया गृहीत्वा। उत्त० १०४।

**आयार**–स्वरूपम्। जं० प्र० १८। मूलगुणादि। दश० २५६। लोचास्नानादि। दश० ११०। आङ्–मर्यादाया चरणं चार –मर्यादया कालनियमादिलक्षणया चार आचार इति। आव० ४४८। चतुर्थनिर्युक्ति। आव० ६१। श्रुतज्ञानादिविषयमनुष्ठानं कालाध्ययनादि। भग० १२२। व्यवहार.। ठाणा० ६४। चारित्रम्। उत्त० ५८३। ज्ञानाचारादि। उत्त० ५८३।

**आयारअक्खेवणी**–आचाराक्षेपणी, आचारो–लोचास्नानादिस्तत्प्रकाशनेन आक्षेपणी। ठाणा० २१०।

**आयारकहा**। नि० चू० द्वि० ६५ अ।

**आयारकुसल**-ज्ञानाद्याचारेण कर्मकुशानां लावकः। व्य० प्र० २३४। आचारे ज्ञातव्ये-प्रयोक्तव्ये वा दक्ष, अभ्युत्थानासनप्रदानाद्युपहितान्तगुणानामाकरो वा। व्य० प्र० २३६।

**आयारक्खी**-आत्मरक्षी, आत्मानं रक्षत्यपायेभ्य' कुगतिगमनादिभ्य इत्येवंशील'। उत्त० २२५।

**आयारगोअर** - आचारगोचर, क्रियाकलाप। दश० १९१। आचार. - मोक्षार्थमनुष्ठानविशेषस्तस्य गोचर। आचा० २६६।

**आयारग्ग**-चूलिका। आचा० ७।

**आयारतेणे**-आचारस्तेन, विशिष्टाचारवत्तुल्यरूपः इति। दश० १९०।

**आयारदंसणं**-आचारदर्शनम्, प्रत्युपेक्षणादिक्रियादर्शनम्। आव० ४४८।

**आयारदोसो**-आचारदोप। आव० ६५४।

**आयारपकप्प**-आचारप्रकल्प, आयरणं आयारो सो य पञ्चविहो-णाणदंसणचरित्ततववीरियायारो य, तस्स पकरिसेणं कप्पणा-सप्तभेदप्ररूपणेत्यर्थ.। नि० चू० प्र० ४ आ। आचार-प्रथमाङ्गं तस्य प्रकल्प.-अध्ययनविशेषो निशीथमित्यपराभिधानं, आचारस्य वा-साध्वाचारस्य ज्ञानादिविषयस्य प्रकल्पो व्यवस्थापनमित्याचारप्रकल्प। सम० ४८। उत्त० ६१६। (निशीथ) आचार एव। आव० ६६०। प्रत्याख्यानपूर्वस्य विंशतितमं प्राभृतं। आचा० ३१९, ३२०। निशीथाध्ययनम्। ठाणा० ३३५।

**आयारपभासणं**-कालनियमाद्याचारव्याख्यानम्। आव० ४४८।

**आयारफल**-आचारफलम्, मुक्तिलक्षणम्। उत्त० ५८३।

**आयारभंडप**-आचारभाण्डम्। अनुत० १।

**आयारभंडग**-आचारभाण्डक-पात्रकम्। ओघ० १५१।

**आयारभाव**-विशिष्टाचार। दश० १९०।

**आयारमंतरे**-आचारान्तरे। आव० ७९३।

**आयारवं**-पंचविहं आयारं जो मुणइ आयरइ वा सम्मं सो। नि० चू० तृ० १२८ आ। ज्ञानादिपञ्चप्रकाराचारवान्। ठाणा० ४२४, ४८४।

**आयारवंतं**-आकारवत्, सुन्दराकार, आकारचित्रं वा। औप० २।

**आयारसमाही**-आचारसमाधि', चतुर्थं विनयसमाधिस्थानम्। दश० ३५५।

**आयारे**-आचार.। नि० चू० तृ० १४८ आ। ज्ञानादिविषयाऽऽसेवा। ठाणा० ३२५। आचार्याणां नमस्कारार्हत्वे तृतीयहेतु, तानाचारवत आचाराख्यापकांश्च प्राप्य प्राणिन आचारपरिज्ञानानुष्ठानाय प्रभवन्ति। आव० ३८३।

**आयारो**-आचार., साधुसामाचारी। प्रश्न० १२५। आचार्यते आसेव्यत इत्याचार.। आचा० ५। आचार। व्य० द्वि० ३९१ अ।

**आयावए**-आतापनाकारी। प्रश्न० १०७।

**आयावगा**-असुरकुमारविशेष'। भग० ६२०।

**आयावणा**-आतापनास्थानम्। आव० ३९१।

**आयावादी**-आत्मवादी। आचा० २२।

**आयावतं**-सकृदीपद्वा तापनमातापनम्। दश० १६३।

**आयाविंतो**-आतापयन्। आव० ३७१।

**आयास**-पीडा। ओघ० १५७। लोहमयम्। भग० ३१९। मन प्रभृतीना खेद., परिग्रहस्य चतुर्विंशतितमं नाम। प्रश्न० ९२।

**आयासकर**-आदेशितः आदेश', आदेशत इति आदेश.। व्य० द्वि० ३३६ आ।

**आयाहिणंपयाहिणं** - आदक्षिणप्रदक्षिण, आदक्षिणात्-दक्षिणहस्तादारभ्य प्रदक्षिण.-परितो भ्राम्यतो दक्षिण एव। सूर्य० ६। आव० १२४। जं० प्र० १७। भग० ११४।

**आयाहिण**-आदाहिणा, आदक्षिणाप्रदक्षिणा। आव० २३२।

**आयुःकर्मानुभूतिः** - स्थितिर्जीवनमिति। प्रज्ञा० १६९।

**आयुःक्षेमस्य**-जीवितस्य। आचा० २९१। आयुष क्षेम - सम्यक्पालनं तस्य। आचा० २९०।

**आयुर्वेदः**-वेदकशास्त्रम्। विपा० ७५।

**आयो**-लाभ'। भग० ९। गमनं, वेदनम्। ठाणा० ३४८।

**आयोगठाणं** - आयोगस्थानम्, मेलनस्थानम्। आव० ८२३।

**आयोग्गहो**-आयपमाणं खेत्तं। नि० चू० प्र० २४६ आ।

**आयोधनस्थानम्**-अट्टालकम्। उत्त० ३११।

**आरं**–आर', ससार' । बृ० प्र० ५१ अ, २०१ अ । इहभव', गृहस्थत्वम्, संसारो वा । सूत्र० ५६ । इहलोकाख्य मनुष्यलोकं वा । सूत्र० १५२ ।

**आरंभ** – आरम्भ., जीवोपघातः, उपद्रवणं, सामान्येन वाऽऽश्रवद्वारप्रवृत्ति । भग० ३१ । श्रावकस्याष्टमी प्रतिमा । आव० ६४६ । आरभ्य । आव० ६८८ । सावद्यानुष्ठानम् । आचा० ७८ ।–जीवोपघात. । भग० ७३५ । पृथिव्याद्युपमर्दनं । ठाणा० १०८ । सावद्यक्रियानुष्ठानम् । आचा० १५६ । आरम्भणमारम्भ., शरीरधारणायान्नपानाद्यन्वेषणा । आचा० २९० ।–प्राणिवध । तत्त्वा० ६–९ । द्रव्योत्पादनव्यापाराः । उत्त० ४५६ । पृथिव्याद्युपमर्दनम् । प्रज्ञा० ३३५ । जीव, -कृष्यादिव्यापारः, जीवानामुपद्रवणं वा । प्रश्न० ६ । नि० चू० प्र० ३३ आ । व्यापारः । प्रश्न० ६३ । हलदन्तालखनन । आव० ८१८ ।

**आरंभइ**–आरभते–पृथिव्यादीनुपद्रवयति । भग० १८३ ।

**आरंभओ** – आरम्भज, आरम्भात्–हलदन्तालखननाज्जायते स । आव० ८१८ ।

**आरंभकहा**–आरंभकथा, छागतित्तिरमहिषारण्यकादिका हता अत्रेति प्रशंसनं द्वेषणं वा । भक्तकथायास्तृतीयभेद । आव० ५८१ । तित्तिराद्युपयोगकथा । ठाणा० २०९ ।

**आरंभपरिण्णाए**–आरम्भ –पृथिव्याद्युपमर्दनलक्षण. परिज्ञात –तथैव प्रत्याख्यातो येनासावारम्भप्रतिज्ञात, श्रमणोपासकाष्टमी प्रतिमा । सम० १९ ।

**आरंभसमारंभो**–आरंभसमारंभः, आरंभा–जीवास्तेषां समारंभ.–उपमर्दः, अथवा आरंभ.–कृष्यादिव्यापारस्तेन समारंभो जीवोपमर्द, अथवा आरंभो–जीवानामुपद्रवणं तेन सह समारंभ, परितापनमिति वा, प्राणवधस्यैकादशपर्याय । प्रश्न० ५ ।

**आरंभिया**– आरंभिकी, आरभ –पृथिव्याद्युपमर्दनं स प्रयोजनं–कारणं यस्या सा, सम्यग्दृष्टे. प्रथमक्रिया । प्रज्ञा० ३३४ । विंशतिक्रियामध्ये प्रथमा । आव० ६१२ । आरम्भणमारम्भ तत्र भवा आरम्भिकी । ठाणा० ४१ ।

**आरक्खि**–आरक्षक चौरग्राहक । बृ० द्वि० १०७ अ । आरक्षिक' । ओघ० ८९ ।

**आरक्खिगो**–दंडवासिगो । नि० चू० तृ० ३० आ ।

**आरक्खितो**–कोट्टवालो । नि० चू० प्र० २६२ अ ।

**आरक्खिय** – आरक्षकः । उत्त० १६५ । दण्डनायकः । दश० १६६ । आव० ६३३ । ओघ० १०६ । आरक्षिकाणामप्युपरि स्थायिनो हिंडिका आरक्षिका', पुररक्षिकाः । व्य० प्र० १३५ अ ।

**आरक्खियपुरिसो**–आरक्षकपुरुषः । आव० ३५१ ।

**आरगय** – आराद्गतम्–आराद्भागस्थितमिन्द्रियगोचरमागतमित्यर्थ' । भग० २१७ ।

**आरघट्टिकम्** । उत्त० ३८२ ।

**आरटन्ती**–रुदन्ती । नंदी १५४ ।

**आरणं**–संशब्दनम् । ओघ० ८१ ।

**आरणा** – आरणा, कल्पोपगैकादशवैमानिकभेद । प्रज्ञा० ६९ ।

**आरण्ण**–आरण्य', तापसादिः । अनु० २४४ ।

**आरण्णगतणं**–श्यामाकादितृणम् । बृ० द्वि० २२० अ ।

**आरण्णिय**–आरण्यकः, अरण्ये भवः, तीर्थिकविशेष. । सूत्र० ४२२ ।

**आरण्यकम्**–लौकिकश्रुतम् । आव० ४६५ ।

**आरत**.–अत्र इतो वा । उत्त० ५४० ।

**आरत्तं**–आरक्तम्, ईषद्रक्तम् । आचा० १२१ ।

**आरद्धो**–आरब्ध' । विशे० ९८१ ।

**आरनालं**–कञ्जियं ( देसीभासाए ) । नि० चू० प्र० ४७ अ ।

**आरनिबद्धा**–आरकनिबद्धा, गन्त्री । पिण्ड० १०२ ।

**आरन्निय**–अरण्ये वसतीति आरण्यकः । सूत्र० ३१५ ।

**आरबके** – आरबदेशोद्भवान्, म्लेच्छविशेषान् । जं० प्र० २२० ।

**आरबदेशजा**–आरब्यः । जं० प्र० १९१ ।

**आरबी**–आरबदेशवासिनी स्त्री । भग० ४६० ।

**आरबो**–आरब, चिलातदेशवासी म्लेच्छ' । प्रश्न० १४ ।

**आरभंती**–आरभमाणा, षट्कायान् विनाशयन्ती । पिण्ड० १५७ ।

**आरभटभसोल**ः–त्रिंशत्तमो नाट्यविधि' । जीवा० २४७ ।

**आरभड** – आरभटम्, नृत्यविशेष. । जं० प्र० ४१२ । नि० चू० तृ० १ अ । जहाभिहितविधाणतो विवरीयं, अहवा तुरियं अण्णंमि वा दरपडिलेहिते अण्णं आढवेति । नि० चू० प्र० १८१ आ । वितथकरणरूपा, त्वरित सर्वमारभमाणस्य, अर्द्धप्रत्युपेक्षित एवैकत्र यदन्यान्यवस्त्रग्रहणं सा । ठाणा०

३६१। विपर्गीना प्रत्युपेक्षणा, आकुल यदन्यान्यवस्त्रग्रहणं तद्वा। ओघ० १०९। मोत्साह सुभग तेषामिदम्। ज० प्र० ८१७। अष्टाविंशतितमो नाट्यविधि। जीवा० २४७। ज० प्र० १४७।

**आरयं**–आरतं, उपरतम्। सूत्र० १०५। अभिविधिना आसक्त। प्रश्न० १३८।

**आरसिउं**–आरस्य, रुदित्वा। आव० ५८४।

**आरसियं**–आरसितम्, शब्दित। आव० २२७।

**आरा**–आरा, प्रवणदण्डान्तर्वर्त्तिनी लोहशलाका। प्रश्न० २२। तुट्ठोवाणहसिव्वणट्ठा। नि० चू० द्वि० १८ अ।

**आराडी**–आराटी, आरसनम्। आव० ६७७।

**आरादण्डः**–प्रतोद। दश० २५०।

**आराम**–तत्र रमणीयतातिशयेन स्त्रीपुरुषमिथुनानि यत्र आरमन्ति स विविधपुष्पजात्युपशोभित आराम। अनु० २४। विविधपुष्पजात्युपशोभितः। ठाणा० ३१२। रति.। आचा० २२९। आराम.–आरमन्ति यस्मिन्माधवीलतादिके दम्पत्यादीनि स आराम। भग० २३८। आरामा–दम्पत्यादीनि येष्वारमन्ति ते। अनु० १४९। वाटिका। प्रश्न० ८। आरमन्ति–यस्मिन् माधवीलतागृहादौ दम्पत्यादीनि क्रीडन्तीति। औप० ३। पुष्पप्रधानवनम्। औप० ४१। दम्पत्योर्नगरासन्नरतिस्थानम्। ज० प्र० ३८८। आगत्य रमन्तेऽत्र माधवीलतागृहादिषु दम्पत्य इति स। जीवा० २५८। दम्पतिरमणस्थानभूतमाधवीलतादिगृहयुक्त। प्रश्न १२७। दम्पतिरतिस्थानलतागृहोपेतवनविशेष। प्रश्न० ७३। माधवीलतागुपेतो दम्पतिरमणाश्रयो वनविशेष। प्रश्न० १२६।

**आरामाइ**–विविधवृक्षलतोपशोभिता. कदल्यादिप्रच्छन्नगृहेषु स्त्रीसहिताना पुमा रमणस्थानभूता। ठाणा० ८६।

**आरामागार**–आराममध्यवर्तिगृहम्। औप० ६१। उद्यानगृहम्। आचा० ३६५। आचा० ३०६।

**आरामिओ**–आरामिक.। आव० ३९०।

**आराहइत्ता**–आराध्य, उत्सूत्रप्ररूपणादिपरिहारेणाराधयित्वा। उत्त० ५७२। यथावदुत्सर्गापवादकुशलतया यावज्जीवं तदर्थनिवनेन। उत्त० ५७२।

**आराहए**–आराधयति, प्रगुणीकरोति। दश० २२४। आराधक.–निरतिचारपालनात्। उत्त० ५७८।

**आराहओ**–आराधक, अविराधक। ओघ० ११२।

**आराहगा**–आराधकाः–आराधयन्ति–अविकलतया निष्पादयन्ति सम्यग्दर्शनादीनि इत्याराधका। उत्त० २३३। आवर्जका। उत्त० ३६१।

**आराहण**–आराधनम्, अखण्डकालकरणम्। भग० २९७।

**आराहणा**–आराधना, सम्यगासेवना। उत्त० ५८६। अनुष्ठानम्। उत्त० ५९१। ज्ञानाद्याराधनात्मिका। उत्त० ५८२। आवर्जनार्थम्। उत्त० ५९१। अखण्डकालस्य करणम्। आव० ८४०। चरमकाले निर्यापणारूपा। दश० २६२। मोक्षमार्गाखण्डना। आव० ५६२। आवश्यकस्य पर्याय। विशे० ४१५। अष्टमशते दशमोद्देशक। भग० ३२८। अखण्डकालकरणम्। उपा० १२। मोक्षाराधनाहेतुत्वात्। अनु० ३१। निरतिचारज्ञानाद्यासेवा। ठाणा० ९८।

**आराहणामरणंते**–आराधनामरणान्ते, मरणकाले आराधना, योगसङ्ग्रहे द्वात्रिंशत्तमो योग। आव० ६६४।

**आराहणी**–आराधनी, आराध्यते–परलोकापीडया यथावदभिधीयते वस्त्वनया, द्रव्यभावभाषाभेद। दश० २०८।

**आराहा**–आरोहन्ति ते आराहा। नि० चू० प्र० २७७ अ।

**आराहिय**–आराधितम्, एभिरेव प्रकारै सम्पूर्णैर्निष्ठा नीता। ठाणा० ३८८। सफलीकृत। उत्त० २९८।

**आराहियचरणया**–आराधितचरणता, चरणप्रतिपत्तिसमयादारभ्य मरणान्तं यावन्निरतिचारतया तस्य पालना। भग० ६९५।

**आराहेइ**–आराधयति, साधयति। उत्त० ५८२।

**आरिए**–आर्या, आराद् याताः सर्वहेयधर्म्मेभ्य इत्यार्या–समाराणेवत.वर्त्तिन क्षीणघातिकर्म्मांशा. समागेदरविवरवर्त्तिभावादि तीर्थकृत। आचा० ११६। ऋद्धिप्राप्ता अर्हदादय, क्षेत्रजात्याद्यार्या। सम० १३५। आर्य–चारित्रार्ह। आचा० १३१।

**आरिओ**–आर्य, आराद् यात सर्वहेयधर्मेभ्य इति। सूत्र० ३३। आराद्यात. सर्वहेयधर्मेभ्य इति, मोक्षमार्ग सम्यग्दर्शनज्ञानचारित्रात्मक। सूत्र० १७२।

**आरियदंसी**–आर्य–प्रगुणं न्यायोपपन्न पश्यति तच्छीलश्चेति आर्यदर्शी–पृथक्प्रेक्षकदयामागनादिसकल्परहित.। आचा० १३१।

**आरियपदेसिए**-आर्यप्रदेशित -तीर्थकरप्रणित.। आचा० २४७।

**आरियपन्ने** - आर्यप्रज्ञ -श्रुतविशेषितशेमुषीक.। आचा० १३१।

**आरिया**-आर्या, आराद्धेयधर्मेभ्यो याता -प्राप्ता उपादेय-धर्मैरिति। प्रज्ञा० ५५।

**आरुग्ग**-आरोग्यं-सिद्धत्वम्। आव० ५०७।

**आरुग्गबोहिलाभो**-आरोग्यबोधिलाभ., आरोगस्य भाव आरोग्यं-सिद्धत्वं, तदर्थं बोधिलाभ -प्रेत्य जिनधर्मप्राप्ति। आरोग्याय बोधिलाभ। आव० ५०८।

**आरुभिता**-छायाया नवमभेद। सूर्य० ९५।

**आरुहयं**-आर्हतम्। आव० ४६५।

**आरुहेत्**। आचा० ३७९।

**आरुह्यते**-अध्यास्यते। उत्त० ५१०।

**आरूढ**-आरुढ., अध्यासित। उत्त० ३४९।

**आरूढे पाउयाहिं**-आरुढ पादुकयो -काष्ठमयोपानहो, एषणाया नवमदायकदोष॰। पिण्ड० १५७।

**आरुवणा**-आरोपणा, यत्रैकस्मिन्प्रायश्चित्तेऽन्यदप्यारोप्यते। प्रश्न० १४५। आचारप्रकल्पस्याष्टाविंशतितमो भेद। आव० ६६०। पर्यनुयोग। विशे० ११५२। पच्छित्तं। नि० चू० प्र० २३९ आ।

**आरे**-पंकप्रभापक्रान्तमहानरका। ठाणा० ३६५।

**आरेण**-आरत, प्रत्यूषसि। ओघ० १४८। आरात्। सूत्र० ४२३। समारभ्य। विशे० ९२८।

**आरोगसाला**-अणाहसाला। नि० चू० द्वि० ३८ आ।

**आरोग्गं**-आरोग्य, रोगाभाव। आव० ३६१। नीरोगता। आव० ३४१।

**आरोग्गा**-अरोगा -जराद्विवर्जिता। ठाणा० २४७।

**आरोवणा** - आरोपणा, आरोपणमेकापराधप्रायश्चित्ते पुन पुन आसेवनेन विजातीयप्रायश्चित्ताध्यारोपणम्। ठाणा० २००। प्ररूपणाया प्रथमभेद। आव० ३८२। परस्परा-वधारणम्। आव० ३८३। प्रायश्चित्तम्। बृ० प्र० ८५ आ। चडावना (मायाप्रत्ययमधिकप्रायश्चित्तम्)। ठाणा० ३२५। चडावणा, अहवा जं दव्वादि पुरिस विभागेण दाण सा आरोवणा। नि० चू० तृ० ८५ अ। आचाराङ्गस्याष्टविंशति-तममध्ययनम्। उत्त० ६१७।

**आरोवणाकसिणं**-आरोपणाकृत्स्नं, षाण्मासिक ततः परस्य भगवतो वर्द्धमानस्वामिनस्तीर्थं आरोपणस्याभावात्। व्य० प्र० ११८ आ।

**आरोवणापायच्छित्तं**-प्रायश्चित्तभेदः। व्य० प्र० ११ अ।

**आरोहकः**। उत्त० ४८।

**आरोहणा** - आरोपणा-प्रायच्छित्तविशेष। व्य० प्र० १२४ आ।

**आरोहपरिणाहयुक्तता**-आरोहो-दैर्घ्यं परिणाहो-विस्तर-स्ताभ्या तुल्याभ्या युक्तता, शरीरसम्पत्प्रथमभेद। उत्त० ३९।

**आरोहा**-महामात्रा। विपा० ४६।

**आरोहो**-उस्सेहो। नि० चू० प्र० २६६ आ। नातिदैर्घ्यं नाति-ह्रस्वता शरीरोच्छ्रयो वा। बृ० प्र० ३०१ आ।

**आर्जिका**-अज्जिए, आर्यिका, मातुः पितुर्वा माता। दश० २१६।

**आर्जवम्**-भावदोषवर्जनम्। तत्त्वा० ९-६।

**आर्त्ताः**-दुखिन रागद्वेषोदयेन। आचा० १८३।

**आर्द्रकः**-आर्द्रकनगराधिपति॰। सूत्र० ३६। विशिष्टतप-श्चरणफलवान्। सूत्र० २९९। सचित्तं तरुशरीरम्। आव० ८२८।

**आर्द्रकुमारः**-प्रतिमादर्शने दृष्टान्त.। बृ० प्र० १८५ अ। सदाचारप्रयत्नवज्ज्ञात। सूत्र० ३८५।

**आर्यः**-आरात्-सर्वहेयधर्म्मेभ्योऽर्वाग् यात। नंदी ४९।

**आर्यकम्**-हरितम्। दश० १८५।

**आर्यकृष्ण**-अज्जकण्हे, आचार्यनाम। विशे० १०२०।

**आर्यखपुट**-विद्याबले दृष्टान्त॰। बृ० तृ० १५६ अ। विद्या-सिद्ध, सिद्धमन्त्र॰। दश० १०३।

**आर्यगङ्गः**-आचार्यनाम। विशे० ९२७।

**आर्यमंगु**-आचार्यनाम। बृ० प्र० २४ अ।

**आर्यरक्षित**-अज्जरक्खिय, आचार्यनाम। विशे० ९२९, ९३०, १००२।

**आर्यवचनम्** - अज्जवयणं, आर्याणां-तीर्थकृता वचनम्-आगम। उत्त० ५२६।

**आर्यवज्रः**-कर्णाभ्या श्रुते दृष्टान्त। बृ० प्र० ६३ अ।

**आर्यवैरः**-अज्जवेर, आचार्यनाम। विशे० ९२९।

**आर्यश्यामः**-आचार्यविशेष। प्रज्ञा० ३०६।

**आर्यसमुद्रः**-आचार्यविशेषः। बृ० प्र० २४ अ।
**आर्यसुहस्ती**-आचार्यविशेष। बृ० प्र० २४ आ।
**आर्या**-अज्जा, प्रशान्तरूपा। अनु० २६। भिक्षुणी। ओघ० २०८।
**आर्याषाढा**-आचार्यनाम। विशे० ९५२।
**आर्यासूत्रम्**-अज्जासुत्तं, सूत्रभेद। बृ० प्र० २०१ आ।
**आर्यिका**-आर्जिका, मातु पितुर्वा माता। दश० २१६।
**आर्यैः**-तीर्थकृद्धिः। आचा० २७४। सकलहेयधर्मेभ्यो दूरं यातैस्तीर्थकरादिभिराचार्यैर्वा। उत्त० २९३।
**आलंकारिअभंडं**-आलङ्कारिकभाण्डम्, आभरणभृतभाजनम्। जं० प्र० २५५।
**आलंकारियं**-आलङ्कारिकम्, अलङ्कारयोग्यं भाण्डम्। जीवा० २३६।
**आलंच**-आलञ्च, द्रव्यस्य बहुत्वेतरादिभिर्लोके प्रतीतभेद.। प्रश्न० ५६।
**आलंब**-आलम्बः, प्रलम्बः। भग० १७५।
**आलंबण**-आलम्बनम्, प्रपततां साधारणस्थानम्। आव० ५३४। प्रवृत्तिनिमित्तं शुभमध्यवसानम्। आव० ५८६। ग्लानादि। उत्त० ५८७। रज्ज्वादिवदापद्गर्तादिनिस्तारकत्वादालम्बनम्। भग० ७३८, ७३९। आश्रयणीयं गच्छकुटुंबकादि। ठाणा० १५४।
**आलंबणवाहा**-अवलम्बनवाहा, द्वयो पार्श्वयोरवलम्बनाश्रयभूता भित्तय। जं० प्र० २९२।
**आलइअ**-आलगितम्, आविद्धम्। आव० १८९। यथास्थानं स्थापितम्। जं० प्र० १६०। प्रज्ञा० १०१।
**आलइयमालमउड**-आगालितमालमुकुटम्, आगलितमालं मुकुटं यस्य स.। भग० १७४। आलगितमालमुकुटः। आचा० ४२३।
**आलए**-आलय, आश्रय। जीवा० २७९। उत्त० ४५४। जं० प्र० १८। वसति, सुप्रमार्जिता स्त्रीपशुपण्डकविवर्जिता वा। आव० ५२९।
**आलग्गो**-अधृतिमापन्न, कातर.। आव० ८००।
**आलपाल**-प्रलाप.। आव० ६६९।
**आलभिआ**-आलंभिका नगरीविशेष, वीरस्य सप्तमवर्षारात्रस्थानम्। आव० २०९, २२१।
**आलभिया**-आलंभिका, नगरीविशेषः। भग० ५५०। नगरीविशेष.। भग० ६७५।
**आलय**-आवास। ओघ० १५६। आश्रय। जीवा० १७६। जं० प्र० १२१।
**आलयविन्नाणं**-आलयविज्ञानं-ज्ञानसंततिः। सूत्र० २६।
**आलयगुणेहिं**-आलयगुणै, वहिश्चेष्टाभिः प्रतिलेखनादिभिरुपशमगुणेन च। बृ० प्र० ६२ अ।
**आलवंते**-आलपन्, अत्यर्थं लपन्। अनु० १४२। आलपति, आङिति ईषल्लपति-वदति। उत्त० ५५।
**आलविज्ज**-ईषत्सकृद्वा लपनमालपनम्। दश० २१६।
**आलवित्तए**-आलपनम्, सकृत्सम्भाषणम्। आव० ८११। आलपितुं-सकृत्सम्भाषितुम्। उपा० १३।
**आलस्स**-आलस्यम्, अनुद्यमस्वरूपम्। उत्त० १५१। अनुत्साहात्मा। उत्त० ३४५।
**आला**-विद्युत्कुमारीमहत्तरिका। ठाणा० ३६१।
**आलापति**-आलगयति। आव० १००।
**आलानम्**-हस्तिवन्धनस्तम्भम्। नंदी० १५३।
**आलाव**-आलापः, सकृज्जल्पः। भग० २२३। आलाप आङ ईषदर्थत्वादीषल्लपनम्। ठाणा० ४०७।
**आलावगो**-आलापक। आव० २६०।
**आलावणवंधे**-आलापनवंधः-आलाप्यते-आलीनं क्रियत एभिरित्यालापनानि रज्ज्वादीनि तैर्बन्धस्तृणादीनाम्। भग० ३९५, ३९८।
**आलावो**-वहुमाणणेहभरितो सरभस णमोक्खमासमणाणंतितो गुरुआलावो भण्णति। नि० चू० प्र० २३७ आ।
**आलि**-वनस्पतिविशेषः। जीवा० २००।
**आलिंग**-आलिङ्ग, यो वादकेन मुरज आलिङ्ग्य वाद्यते। जं० प्र० १०१। मुरजो वाद्यविशेष। जं० प्र० ३१। मृन्मयो मुरज। जीवा० १०५।
**आलिंगकसंठित**-आलिङ्गसंस्थित, आवलिकावाह्यस्य चतुर्दशं सस्थानम्। जीवा० १०४।
**आलिंगण**-आलिङ्गनम्, ईषत्स्पर्शनम्, सम्प्राप्तकामस्य दशमो भेदः। दश० १९४। स्पृशनम्। नि० चू० प्र० २५६ आ।

**आलिंगणवट्टि**–आलिङ्गनवर्ती, शरीरप्रमाणमुपधानेन वर्त्तते यत्। जं० प्र० २८५। जीवा० २३२। सूर्य० २९३।

**आलिंगणि** – आलिङ्गिनी, अप्रतिलेखितदूष्यपञ्चके चतुर्थो भेद। आव० ६५२।

**आलिंगपुक्खरे** – आलिङ्गपुष्करम्, मुरजमुखम्। भग० १४५।

**आलिंगणी**–पुरुषप्रमाण पार्श्वमुपधानं। बृ० द्वि० २२० अ। जाणुकोप्परादिसु जा दिज्जति सा। नि० चू० द्वि० ६१ अ।

**आलिंगिता** – पुरिसेणित्थीस्तनादिषु स्पृष्टा। नि० चू० प्र० ११३ अ।

**आलिंगो**–आलिङ्गय। जीवा० २६६। आलिङ्ग, मुरजो वाद्यविशेष। जीवा० १८९।

**आलिंपइ**–सकृत् लिंपइ। नि० चू० द्वि० ७६ आ।

**आलि**–वनस्पतिविशेष। जं० प्र० ४५। जीवा० २००। खल। विशे० ६११। औषधविशेष। प्रज्ञा० ३३

**आलिखिज्जति**–आलिख्यते। आव० ८५७।

**आलिघरं** –आलिगृहकम्, वनस्पतिविशेषस्तन्मयं गृहकम्। जीवा० २००।

**आलिट्ठमणालिट्ठं**–आलिष्टानाश्लिष्टम्, कृतिकर्मणि चतुर्भङ्गभिन्न सप्तविंशतितमो दोष। आव० ५४४।

**आलित्त**–अभिविधिना ज्वलित। भग० १२१। आदीप्त। अन्त० १७। आलित्र, नौवाहनोपकरण। आचा० ३७८।

**आलिद्धा** – आदिग्धा, शिलाया शिलापुत्रके वा लग्ना। भग० ७६६।

**आलिन्दकम्**–अलिंदग, कुण्डुल्कम्। अनु० १५१।

**आलिसंदग**–चपलका। जं० प्र० १२४। चवलकप्रकारा, चवलका। भग० २७४। धान्यविशेष। भग० ८०२।

**आलिसिंदया**–चवलया। ठाणा० ३४४।

**आलिहइ**–आलिखति, विन्यसति। जं० प्र० १९२।

**आलिहमाण**–आलिखन्, ईषत् सकृद्वाऽऽकर्षन्। भग० ३६५।

**आलिहाविज्जा**–ईषत्सकृद्वाऽऽलेखनम्। दश० १५२।

**आलिहित्ता** – आलिख्य, आकारकरणेन कृत्वा अन्तवर्णकादिभरणेन पूर्णानि कृत्वा। जं० प्र० १९२।

**आलीढं**–आलीढम्, आक्रान्तम्। आव० ७०४। दक्षिणपादमग्रतो भूतं कृत्वा वामपाद पश्चात्कृत्यापसारयति, अन्तर द्वयोरपि पादयो. पञ्च पादा, लोकप्रवाहे प्रथम स्थानम्। आव० ४६५। यत्र दक्षिण पादमग्रत कृत्वा वामपादं पृष्ठत सारयति, अन्तरं द्वयोरपि पादयो पञ्च पदानि तत्स्थानम्। उत्त० २०५। दक्षिणमूरुमग्रतो मुख कृत्वा वाममूरु पश्चात्मुखमपसारयति, अन्तरा च द्वयोरपि पादयो पञ्च पदा ततो वामहस्तेन धनुर्गृहीत्वा दक्षिणहस्तेन प्रत्यञ्चामाकर्षति तत। व्य० प्र० ४६ आ। योधसस्थानं। आचा० ८९। योधस्थानम्। ठाणा० ३। वामूरुअ अग्गओ काउ दाहिणपिट्ठतो वामहत्थेण धणू घेत्तूणं दाहिणे एयं गच्छइ। नि० चू० तृ० ९० अ।

**आलीणाणि**–ईसिं लीणाणि। दश० चू० १२५।

**आलीणे**–आलीन। जीवा० २७३। गुरुसमाश्रित, संलीनो वा। भग० ८१।

**आलीवग**–आदीपिक, गृहादिप्रदीपनककारी। प्रश्न० ४६।

**आलीवणं**–व्याकुललोकाना मोषणार्थं ग्रामादिप्रदीपनकम्। विपा० ३९।

**आलीवण**। नि० चू० द्वि० १७० अ।

**आलुंचनं**–आलुञ्चनं, ग्रहणम्। आव० ५६२।

**आलुंपे** – आलुम्प, निर्लाञ्छनगलकर्त्तनचौर्यादिक्रियाकारी। आचा० १०२।

**आलुए**–आलुक –अनन्तकायभेद। भग० ३००। कन्दविशेष। उत्त० ६९१। आलुकम् – साधारणवनस्पतिकायिकभेद.। जीवा० २७। आलुका–कुण्डिका। अनुत्त० ५५।

**आलुयं**–आलुकम्, कन्दविशेष। अनुत्त० ६। त्रयोविंशतितमशतकाद्योद्देशक। भग० ८०४। आर्द्रकम्। भग० ८०४।

**आलेखः**–विचित्रम्। जीवा० १९९।

**आलेवणं**–आलेपनम्। आव० ६२३। आचा० ३२।

**आलेहो**–आलेख, चित्रम्। जं० प्र० ३२।

**आलो**–आल, अशक्यक्रियम्। आव० ९४।

**आलोअ**–अवलोक, निर्यूहकादिरूप। दश० १६६। वहि – प्रस्थानभाविनि शकुनानुकूल्यालोकेन। जं० प्र० २६३। गौरप्रकाशम्। प्रज्ञा० ५००।

**आ(अव)लोअचलं**–आ(अव)लोकचलम्, अवलोकनमालोकस्तरिमेश्चलं, दर्शनलालसम्। आव० ७८४।

**आलोअणं**–आलोकनम्, निरूपणम्। ओघ० ५२। अण्णेगिं आख्यानं। नि० चू० प्र० ३३४ अ। आलोक्यन्ते दिशोऽ

स्मिन् स्थितैरिति। उत्त० ४५१। आलोचनम्-गुरुनिवेदनम्। ठाणा० १३७। प्रायच्छित्तभेद। ठाणा० २००।

**आलोअणा**-आलोचना, आभिमुख्येन गुरोरात्मदोषप्रकाशनम्। आव० ४६९।

**आलोअभायणं**-आलोकभाजनम्, मक्षिकाद्यपोहाय प्रकाशप्रधानं भाजनम्। दश० १८०।

**आलोइज्ज**-आलोचयेत्-प्रकाशयेत्। उत्त० ५४४।

**आलोइज्जा**-आलोकयेत्-पश्येत्-ब्रुयात्। आचा० ३२८। अवलोकयेत्। आचा० ३९६।

**आलोइता**-आलोकिता, ईषद्द्रष्टा। उत्त० ४२५। समन्ताद्द्रष्टा। उत्त० ४२५।

**आलोइत्तए**-आलोचयितुम्, गुरवेऽपराधान्निवेदयितुमिति। ठाणा० ५६।

**आलोइयं**-आलोकितं-प्रत्युपेक्षितं। आचा० ४२८।

**आलोइयपडिक्कंते**-आलोचितप्रतिक्रान्तः, आलोचितं गुरूणां यदतिचारजातं तत्प्रतिक्रान्तम्-अकरणविषयीकृत येनाथवाऽऽलोचितश्चासावालोचनादानात्प्रतिक्रान्तश्च मिथ्यादुष्कृतदानादालोचितप्रतिक्रान्त। भग० १२८।

**आलोए**-आलोक, दर्शनम्। भग० ३१८। दर्शनं, दृश्यमानता। जीवा० ३९१। आलोचयेत्-दत्तावधानो भवेत्। आचा० ३४२। चक्षुर्दर्शनपथे। ओघ० १८३।

**आलोएइ**-आलोचयति। आव० ७२५।

**आलोएज्जा**-आलोचनं-गुरुनिवेदनम्। ठाणा० १३७।

**आलोएत्तो**-आलोयणा। व्य० प्र० १०८ अ।

**आलोको**-आलोक्यत इति आलोक-स्थानदिगादिनिरूपणम्। ओघ० १८१। अतिरिक्तप्रदीपशिखादिदर्शनम्। उत्त० ६३१। सावकाशं मुक्त्वाऽभ्यन्तरे स्वपन्ति। ओघ० १०७। आलोक्यन्ते दिशोऽस्मिन् स्थितैरिति। उत्त० ४५१।

**आलोग**-आलोकम्, सौरप्रकाशम्। ज० प्र० २२९। चोपलपादी। दश० चू० ७६। समो भूभागः। ओघ० १९३। आलोकनमालोको यावद्दृष्टिप्रसर। ओघ० २३।

**आलोचनम्**-प्रकटनं प्रकाशनमाख्यानं प्रादुष्करणम्। तत्त्वा० ९-२२।

**आलोचयति**-गणयति प्रेक्षते च। आव० ५३६।

**आलोचयेत्**। व्य० द्वि० ७१ अ।

**आलोयं**-आलोकम्। ओघ० ८४। दृष्टिपथम्। औप० ६९। स्थानदिक्प्रकाशादिसप्तधाऽऽलोकम्। बृ० तृ० १४० आ। प्रकाश। आव० ६४२। आलोकस्थानं-गवाक्षादिक। आचा० ३४१।

**आलोयणं**-आलोचनम्, यथागृहीतभक्तपाननिवेदनम्। प्रश्न० १११। आलोचना, प्रयोजनतो हस्तशताद्बहिर्गमनागमनादौ गुरोर्विकटना, मिथ्यादुष्कृत च। आव० ७६४। एकादशी गुर्वाशातना। आव० ७२५। गुरोः पुरतो वचसा प्रकटीकरणम्। व्य० प्र० १४ अ। ठाणा० २००। अलवण। व्य० द्वि० ३३५ अ। सकृत् अनेकश प्रलोकनम्। नि० चू० प्र० २२२ अ।

**आलोयणा**-आलोचना, आङिति-सकलदोषाभिव्याप्त्या लोचना-आत्मदोषाणां गुरुपुरत प्रकाशना। उत्त० ५७९। आलोचना। ओघ० २२५। योगसङ्ग्रहे प्रथमो योग। आव० ६६३। परस्स पागड करेइ। नि० चू० तृ० ८५ अ। व्य० प्र० १०७ आ।

**आलोयणाणुलोमं**-आलोचनानुलोम्यम्, पूर्वं लघवः आलोच्यन्ते पश्चाद् गुरव। आव० ७८१।

**आलोयणारिहं**-आलोचना-निवेदना तल्लक्षणा शुद्धिं यदर्हत्यतिचारजातं तदालोचनार्हम्। भग० ९२०।

**आलोयभायणं**-आलोकभाजनम्, प्रकाशमुखे भाजने, अथवा आलोके-प्रकाशे नान्धकारे पिपीलिकावालादीनामनुपलम्भात्, तथा भाजने-पात्रे, पात्र विना जलादिसम्पतितसत्त्वादर्शनादिति। प्रश्न० ११२।

**आलोविअ**-अलोपिक। दश० ४४।

**आलोवेइ**-आलोचयति। आव० ७१०।

**आवंति**-आचारप्रकल्पे प्रथमश्रुतस्कन्धस्य पञ्चममध्ययनम्। प्रश्न० १४५। आचाराङ्गस्य पञ्चममध्ययनम्। उत्त० ६१६। आचारांगे प्रथमश्रुतस्कधस्य पंचमाध्ययनम्। सम० ४४। आचा० १९६। यावन्त। आचा० १८५। आचारप्रकल्पस्य पञ्चमो भेद। आव० ६६०।

**आवंती**-लोकसारापराभिध, आचारांगपंचमाध्ययनम्। ठाणा० ४४४।

**आवइ**-आगच्छत्यापतति। उत्त० २८०।

**आवईसु दढधम्मया**-आपत्सु दृढधर्मता, योगसङ्ग्रहे तृतीयो योग। आव० ६६४।

**आवकधाते**–यावत्कथा–यावज्जीवम्। ठाणा० २३६।

**आवकहियं**–यावत्कथिकम्, प्रव्रज्याप्रतिपत्तिकालादारभ्या-प्राणोपरमात् तच्च भरतैरावतभाविमध्यद्वाविंशतितीर्थकरतीर्थान्तरगताना विदेहतीर्थान्तरगतानां च साधूनामवसेयम्। प्रज्ञा० ६३। सकृद्गृहीतं यावज्जीवमपि भावनीयम्। आव० ८३९। यावज्जीविक व्रतादिलक्षणम्। आव० ५६३। यावज्जीविक महाव्रतभक्तपरिज्ञादिरूपम्। ठाणा० ३८०। ये कल्पसमाप्त्यनन्तरमव्यवधानेन जिनकल्पं प्रतिपत्स्यन्ते ते यावत्कथिका। प्रज्ञा० ६८।

**आवज्जणं**–आवर्जनम्। ओघ० १६९।

**आवज्जय**–आवर्जक, आराधक। उत्त० ३६१।

**आवज्जीकरणं**–आवर्जीकरणम्, आवर्जित–अभिमुखीकृतः मोक्षगमनं प्रत्यभिमुखीकृतस्य करणं–क्रिया शुभयोगव्यापारः। प्रज्ञा० ६०४। आवर्जीकरणम्–अन्तर्मौहूर्त्तिकं उदीरणावलिकाया कर्मप्रक्षेपव्यापाररूपम्। ठाणा० ४४२।

**आवट्ट**–आवर्त्त शङ्खसत्क। उत्त० ६०५। ससार.। आचा० ६२।

**आवट्टजोणी**–आवर्त्तयोनि, आवर्त्तोपलक्षिता योनि। उत्त० १८३।

**आवट्टणं**–आवर्त्तनम्, परिभ्रमणम्। सूर्य० २७६।

**आवट्टती**–आवर्त्यते, पीड्यते–दु खभागभवति। सूत्र० १९०।

**आवट्टितो**–आवृत्त। आव० ९५।

**आवट्टो**–आवर्त्त, आवर्त्तयति–प्राणिनं भ्रामयतीति। सूत्र० ८६। उत्त० १८३। जीवा० २४३।

**आवड**–आवर्त्त–मणीनां लक्षण। जीवा० १८९।

**आवडइ**–आपतति, भवति। ओघ० ९०।

**आवडण**–अभिघात, आपतनं वा। बृ० द्वि० ७७ आ। प्रस्फोटनम्। ओघ० १२२। आभिडण। ओघ० २०४। पक्खलण। नि० चू० प्र० ४९ अ। आपतनं–द्वाराद्दौ शिरसो घट्टनम्। बृ० प्र० २९५ अ।

**आवडणपडणादी**–आपतनपतनादय। ओघ० ९०।

**आवडणा**–उसुआदिसु पक्खलणा। नि० चू० तृ० २१ अ।

**आवडिऊण**–आपत्य। आव० १९६।

**आवडिए**–अवक्रोटितानि, अधस्तादामोटितानि। उत्त० ३६७।

**आवडिओ**–आपतितः। आव० ५७८। आस्फालित। आव० १९६। आपतितम्। उत्त० १७०। आव० ३२०।

**आवडिया**–आपतितौ, प्राप्तौ। उत्त० ५३०।

**आवण**–आपण., हट्ट। भग० २३८, १३६। प्रश्न० ८। वीथिः। दश० १७६। जं० प्र० १०७। अनु० १५९। आपण, पण्यस्थानम्। प्रश्न० १२७।

**आवणवीहि**–आपणवीथिः, हट्टमार्गे, रथ्याविशेष। जीवा० २४६।

**आवणाइ**–आयतनानि, आपतनानि वा उपभोगार्थमागमनानि। जं० प्र० १२१।

**आवण्ण**–आपन्नपरिहारिका। बृ० तृ० २० अ।

**आवण्णपरिहारो**–आपन्नपरिहारिक, जो मासियं वा जाव छम्मासिय वा पायच्छित्तं आवण्णो तेण सो सपच्छित्ती असुद्धो अ विसुद्धचरणेहिं साहूहिं परिहरिज्जति इह तेण अहिकारो। नि० चू० तृ० ८९ आ।

**आवण्णसत्ता**–आपन्नसत्त्वा, गर्भवती। उत्त० ५३।

**आवती**–प्रतिसेवनापंचमभेद.। भग० ९१९। आपत्–द्रव्यत प्रासुकद्रव्यं दुर्लभ क्षेत्रतोऽध्वप्रतिपन्नता कालतो दुर्भिक्षं भावतो ग्लानत्व। ठाणा० ४८४।

**आवतीगंगा**–गंगामहागंगासादीनगंगामृत्युगंगालोहितगंगात सप्तगुणा आवतीगंगा। भग० ६७४।

**आवत्त**–आवर्त्त, आवर्त्तनम्, प्रादक्षिण्येन परिभ्रमणम्। जं० प्र० १८७। षोडशसागरस्थितिक महाशुक्रविमानम्। सम० ३२। आवर्तक, पयसा भ्रम.। जं० प्र० १११। चिकुरसस्थानविशेष। जं० प्र० १८३। मणीना लक्षणानि। ज० प्र० ३१। महाविदेहे विजयनाम। ज० प्र० ३४६। अप्राप्तम्–अस्पृष्टम्, आवर्त्त आवृत्तिरावर्त्तन–परिभ्रमणम्। भग० १२८। आवर्त्तिका। जीवा० २४४।

**आवत्तकूडे**–आवर्तकूटम्, नलिनकूटे तृतीयकूटनाम। जं० प्र० ३४६।

**आवत्तगा**–एकखुरविशेषचतुष्पद। प्रज्ञा० ४५।

**आवत्तणपेढिया**–आवर्तनपीठिका, यन्त्रेन्द्रकीलिका। जीवा० २०४। यन्त्रेन्द्रकीलको निवेशित। जीवा० ३५९। यन्त्रेन्द्रकीलो भवति। जं० प्र० ४८। अप्रद्वारम्। नि० चू० तृ० १९अ। आवर्तनम्–मक्तीभवनम्। व्य० प्र० २०३ आ।

**आवत्ता**–आवर्ता, ग्रामविशेष । आव० २०६ । आवर्त्तवहुलजला नदी । वृ० तृ० १६२ आ । धातकीखडे तन्नाम महाविदेहगतो विजय । ठाणा० ८० ।

**आवत्ते**–आवर्त्त , विजयस्य नाम । जं० प्र० ३४६ । घोषव्यन्तरेन्द्रलोकपाल । ठाणा० १९८ ।

**आवत्तो**–आवर्त्त , एकखुरविशेष । प्रश्न० ७ । एकखुरश्चतुष्पद । जीवा० ३८ । नाट्यविशेष , भ्रमद्भ्रमरिकादानैर्नर्त्तनम् । जं० प्र० ४१४ । जीवा० २४६ ।

**आवपनम्**–लोहमयं शकटोपकरणम् । पिण्ड० २२ ।

**आववहुले**–अब्बहुलम् , जलवहुल, रत्नप्रभापृथ्व्यास्तृतीयकाण्ड' । जीवा० ८९ ।

**आवयं**–आवर्त्त , अहोकायमित्यादि सूत्रगर्भो गुरुचरणन्यस्तहस्तशिर स्थापनारूप , सूत्राभिधानगर्भ कायचेष्टाविशेष' । आव० ५४२ ।

**आवयइ**–अतिपतति । आचा० २६५ ।

**आवरणं**–आवरणम् , स्फुरकादि । प्रश्न० १३ । आव्रियते आकाशमनेनेति, भवनप्रासादनगरादि तल्लक्षणशास्त्रम् । ठाणा० ४५१ । सन्नाह । प्रश्न० ४९ । कवचादि । उत्त० १४३ । आव० ३४६ । कपाट । वृ० द्वि० १११ अ । कवच । भग० ९४ । आवरणे–प्रच्छादनपटे । जं० प्र० २३६ । फलकादि । आचा० ६० । स्फुरककण्टकादि । भग० ३१८ । आङो मर्यादेपदर्थवचनत्वात् ईषन्मर्यादया वाऽऽवृणवन्तीत्यावरणा , ततश्च सर्वविरतिनिषेधार्थ एवायं वर्तते न देशविरतिनिषेधे खल्वावरणशब्द । आव० ७८ । खेटकं सन्नाहं वा । जं० प्र० ३५९ । सन्नाह । ठाणा० ४५० ।

**आवरणप्रविभक्तिः**–अष्टमनाट्यभेद । जं० प्र० ४१६ ।

**आवरिसणं**–पाणिएण उप्फोसण । नि० चू० प्र० १७२ आ ।

**आवरेत्ता**–आवृत्य–अवष्टभ्य । भग० ५७६ ।

**आवर्जनम्**–आराधना । उत्त० ५९१ । आवर्षण गन्धोदकादिना । अनु० २६ ।

**आवर्तना**–आउट्टणा, आवर्जन, निवेदनम् । वृ० प्र० ४७ आ ।

**आवलगनादिकाः**–क्रियाविशेषा' । आचा० १२४ ।

**आवलणं**–आवलनम् , मोटन, अथवा गलकस्य वलादावलनं मारण चेति । प्रश्न० २२ ।

**आवलियपविट्ठो** – आवलिकापविष्ट , श्रेणिव्यवस्थित । जीवा० १०५ ।

**आवलिया** – आवलिका– असख्यातसमयमाना । ठाणा० ८५ । आवलिका, श्रेणि. । जीवा० १०५ । असख्येयसमयसघातोपलक्षित काल' । आव० ३१ । परंपरा । आव० ८५८ । असङ्ख्यातसमयात्मिका । भग० २११ । वश , प्रवाह । जं० प्र० १६६ । तत्र या विच्छिन्ना एकाते भवति मण्डली सा आवलिका । व्य० द्वि० २१ अ । असङ्ख्येयसमयसमुदायिका । सूर्य० २९२ । वंश , प्रवाह । जं० प्र० २५८ ।

**आवलियाठावगो**–आवलिकास्थापक आचार्यपारम्पर्यम् । आव० ३०७ ।

**आवलियापविट्ठ**–आवलिकाप्रविष्टम् , यत्पूर्वादिषु चतसृषु दिक्षु श्रेण्या व्यवस्थितम् । जीवा० ३९७ ।

**आवलियावाहिरं** – आवलिकावाह्यम् , यत्पुनरावलिकाऽऽविष्टानां प्राङ्गणप्रदेशे कुसुमप्रकर इव यतस्ततो विप्रकीर्णम् । जीवा० ३९७ ।

**आवली**–हार । वृ० प्र० ४८ अ । पुद्गलाना दीर्घरूपा श्रेणि । सूर्य० १३० । आवली, पङ्क्ति । ओघ० ८२ ।

**आवल्लिक**–आवल्लिक । विशे० १३५५ ।

**आवल्लो**–वलीवर्द । आव० ६६५ । उत्त० १९२ ।

**आवसंत**–आवसन् , विवसन् । आचा० ११ । आश्रिति–गुरुदर्शितमर्यादया वासना । उत्त० ८० । ठाणा० ९ । मया गुरुकुले आमृशन् । सम० २ । आवसन्–सेवमान । आचा० २१३ ।

**आवसह** – आवसथ , आश्रय । उत्त० ६२६ । दश० २४५ । शेषभवनप्रकार । उत्त० ३८५ । आवसथ , परिव्राजकस्थानम् । प्रश्न० १२६ । औप० ६१ । परिव्राजकाश्रय । प्रश्न० ८ । उटजाकार गृहम् । सूत्र० ३१५ ।

**आवसहिय**–आवसथिक , तीर्थिकविशेष । सूत्र० ४२२ ।

**आवसिया**–आवश्यिकी, अवश्यकर्त्तव्ययोगैर्निष्पन्ना । आव० २५९ ।

**आवस्सए**–आवश्यकम् , अवश्यकर्त्तव्यं सयमव्यापारनिष्पन्नम् । आव० ११९ । कायिकादिव्युत्सर्गम् । ओघ० १४७ ।

**आवस्सग**–आवश्यकम् , समन्तादात्मवश्यकारकम् । अनु० ११ । अवश्य कर्तव्यं आवश्यक–कायिकाव्युत्सर्गरूपम् । ओघ० १४९ । कायिकोच्चारादि । ओघ० ८७ । प्रतिक्रमणम् ।

ओघ० ९३, ५८। सामायिकादि षडध्ययनकलाप । अनु० ७। आवश्यकम्, श्रमणादिभिरवश्यं क्रियत इति, ज्ञानादिगुणा मोक्षो वा आ–समन्ताद् वश्य क्रियतेऽनेन इति, आ-समन्ताद्वश्या इन्द्रियकषायादिभावशत्रवो येषा ते तथा, तैरेव क्रियते यत् तत् । अनु० ३१। आवासक वा समग्रगुणग्रामावासक वा। अनु० ३१। दोषत्यागलक्षणमवनतादिकम्। आव० ५४५। गुणानां आ–समन्ताद्वश्यमात्मान करोति। अनु० १०। श्रमणादिभिरहोरात्रमध्येऽवश्यंकरणात्। विशे० ४१५। नियमत करणीयम्। आव० ५९४। अवश्यं कर्त्तव्यम्, सामायिकादिरूपम्, आ–समन्ताज्ज्ञानादिगुणै शून्यं जीवं वासयति, तैर्युक्तं करोतीत्यावासकं–सामायिकादिरूपम्। विशे० २। भद्रम्। आव० ४२६। मूलगुणोत्तरगुणानुष्ठानलक्षणः। आव० २६७। आवर्त्तादिकम्। आव० ५११। कायिकाव्युत्सर्गलक्षणम्। ओघ० १५२। सामायिकादिषड्विधम् । ठाणा० ५१ । अवश्यं कर्तव्यमावश्यकं, अथवा गुणानामावश्यमात्मानं करोतीत्यावश्यकं, यथा अन्त करोतीत्यन्तक, अथवा 'वस निवासे' इति गुणशून्यमात्मानमावासयति गुणैरित्यावासकम्। आव० ५१।

**आवस्सय** – अपाश्रय.–आधार । विशे० ४१५। सञ्ज्ञा कायिकीलक्षणम्। वृ० द्वि० २६१ अ।

**आवस्सयाइं** – आवश्यकानि, शरीरचिंतादेवातर्चनादीनि। व्य० प्र० १६९ आ।

**आवस्सिआ**–आवश्यकी, क्वचिद्बहिर्गमनकार्ये समुत्पन्नेऽवश्यंगन्तव्यमितिभणनम्। वृ० प्र० २२२ अ । ज्ञानाद्यालम्बनेनोपाश्रयाद् बहिरवश्यंगमने समुपस्थितेऽवश्यं–कर्त्तव्यमिदमतो गच्छाम्यहमित्येव गुरुं प्रति निवेदना । अनु० १०३ ।

**आवस्सिता**–चतुर्थी सामाचारी। ठाणा० ४९९।

**आवस्सिया**–आवश्यिकी, अवश्यकर्त्तव्यैश्चरणकरणयोगैर्निर्वृत्ता । आव० ५४७। वृ० द्वि० २२४ अ।

**आवहो**–दारकपक्षिणामावह । व्य० द्वि० ३४२ आ।

**आवाए**–आपात, अन्यतोऽन्यत आगमनात्मक॰। उत्त० ८६ ।

**आवाओ**–आपाक. । विशे० ८७३। आपाकोतीर्गा–मृतना। विशे० ६३०।

**आवागसीसाओ**–आपाकशिरस । नंदी० १७७।

**आवागो**–आपाकः, भ्राष्ट्रं । आव० १०१।

**आवाडा**–आपाता इति नाम्ना किराता । जं० प्र० २३२।

**आवातभद्दते** – प्रथममीलके दर्शनालापादिना भद्रकारी। ठाणा० १९७।

**आवाय**–आपातः, तत्प्रथमतया ससर्ग । भग० ३२६। आभिमुख्येन समवाय । आव० ३२६। अभ्यागम.। ओघ० ११९।

**आवारि**–लघ्वापणम्, आस्पदम्। आव० ६७५।

**आवावकहा**–आवापकथा, ईयद्द्रव्या शाकघृतादिश्चात्रोपयुक्ता इत्यादि प्रशसनं द्वेषणं वा, भक्तकथाया. प्रथमभेद॰। आव० ५८१। शाकघृतादीन्येतावन्ति तस्या रसवत्यामुपयुज्यन्त इत्येवंरूपा कथा आवापकथा। ठाणा० २०९।

**आवास** – आवास॰, देववासस्थानम्। जं० प्र० ३९७। आवश्यकम्–प्रतिक्रमणम्। आव० ७८४। ओघ० २००। प्रज्ञा० ६०६। निवास । जीवा० १८०।

**आवासग**–आवासकम्, समन्ताद्वासयति गुणैरिति। अनु० ११। गुणशून्यमात्मानमावासयति गुणैरिति, गुणसान्निध्यमात्मन करोतीति भावार्थ । आव० ५१। प्राभातिकवैकालिकप्रतिक्रमणलक्षणे। व्य० द्वि० १८२ अ।

**आवासिय**–आवासित॰, स्थित॰। दश० १०७।

**आवासेंति**–आवासयन्ति, वसन्ति। आव० ६५४।

**आवाहं**–सरीरवज्जा पीडा । नि० चू० प्र० ३३५ अ।

**आवाह**–आवाह, विवाहात्पूर्वं ताम्बूलदानोत्सव.। जं० प्र० १२३। जीवा० २८१।

**आवाहणं**–आवाहनम्, गमनम्। प्रश्न० २०।

**आवाहिओ**–आहूत । आव० ३६९, ३९३।

**आवाहो**–आवाह, अभिनवपरिणतस्य वधूवरस्यानयनम्। प्रश्न० १३९। सुहं दिवस। नि० चू० द्वि० ९२ आ। वध्वा वरगृहानयनम्। वृ० तृ० ४३ आ। आहूयन्ते स्वजनास्ताम्बूलदानाय यत्र स । जीवा० २८१।

**आविंध**–परिधेहि। आव० ९९।

**आवि**–आवि, जनसमक्षं प्रकाशदेश इतियावत्। उत्त० ५४।

**आविइ**–अनुसमयम्–प्रतिक्षणम्। भग० ६२५।

**आविइत्ता**–अवनस्य दद्यात्। व्य० द्वि०

**आविप**–आपिव। उत्त० ३३९।

**आविद्धं**-परिहितम् । ज० प्र० १९०, २७८ । आलगितम् । प्रज्ञा० १०१ । व्याप्तम् । उत्त० ५४८ । समन्तात्ताडित । उत्त० ४९५ । शिरस्यारोपणेन आविद्ध । भग० १९३ ।

**आविद्धामो**-परिदध्म । आव० ६५ ।

**आविर्भावः**-प्रकाश, प्रकटत्वम् । विशे० १०६२ ।

**आविलं**-आविलम्, सकालुष्यमाकुल वा । प्रश्न० ५३ । अविमलमस्वच्छ प्रकृत्या । जीवा० ३०३ ।

**आविष्टलिंगं** । नंदी १ ।

**आविसामि**-आविशामि, निषेवे । विशे० १२४७ ।

**आवी**-गंगागामी नदीविशेष । ठाणा० ४७७ ।

**आवीईमरणे**-आ-समन्ताद्वीचय इव वीचय -आयुर्दलिकविच्युतिलक्षणाऽवस्था यस्मिंस्तदावीचि, अथवा वीचिः-विच्छेदस्तदभावादवीचि, दीर्घत्वं तु प्राकृतत्वात्तदेवंभूतं मरणमावीचिमरणं-प्रतिक्षणमायुर्द्रव्यविचटनलक्षणम् । सम० ३३ ।

**आवीचिमरणं**-आवीचिमरण, सप्तदशमरणभेदे प्रथम । उत्त० २३० ।

**आवीचियमरणं** - आ-समन्ताद्वीचय -प्रतिसमयमनुभूयमानायुषोऽपरापरायुर्दलिकोदयात्पूर्वपूर्वायुर्दलिकविच्युतिलक्षणाऽवस्था यस्मिन् तदावीचिक, अथवाऽविद्यमाना वीचि - विच्छेदो यत्र तदवीचिक अवीचिकमेवावीचिक तच्च तन्मरणं चेत्यावीचिकमरणम् । भग० ६२४ ।

**आवीलए**-आङ् ईषदर्थे, ईषत्पीडयेद्-अविकृष्टेन तपसा शरीरकमापीडयेत्, एतच्च प्रथमप्रव्रज्याऽवसरे । आचा० १९२ ।

**आवीलाविज्जा**-आपीडनम्, सकृदीषद्वा पीडनम् । दश० १५३ ।

**आवेउं**-आपातुम्, भोक्तुम् । दश० ९६ ।

**आवेढिओ**-एगदुतिदिसिट्ठितेसु, अहवा एगपंतीए समता ठिएसु, आङ् मर्यादयाऽऽवेष्टित । नि० चू० तृ० ४६ आ ।

**आवेढियं**-आवेष्टितम्, सकृदावेष्टितम् । ठाणा० ५०२ ।

**आवेढियपरिवेढिए** - आवेष्टितपरिवेष्टित ; गाढतरं सवेष्टित । प्रज्ञा० ३०६ ।

**आवेयणं** - आवेदयति, निवेदयति कालमित्यर्थ । ओघ० २०४ ।

**आवेलिज्ज**-आपीडयेत्, गाढमवगाहयेत् । उत्त० ४७५ ।

**आवेसणं** - लोगसमवायट्ठाण । नि० चू० द्वि० ६९ आ । आ-समन्ताद्विशन्ति यत्र नदावेशनम् -शून्यगृहम् । आचा० ३०७ ।

**आशातनम्**-आ-समन्तात् शातयति मुक्तिमार्गाद् भ्रशयति । अनन्तानुबन्धिकषायवेदनम् । विशे० २८३ ।

**आशाम्बराः**-दिगम्बरा । प्रज्ञा० २०।

**आश्यानः** । ओघ० ३२ ।

**आश्रयं गच्छामि**-भक्ति करोमीत्यर्थ । आव० ५७१ ।

**आश्रित्य**-प्रतीत्य । जीवा० ५६ । उत्त० ६०२ ।

**आसं**-अश्वम्, मन । प्रज्ञा० ६०० । आशा-भोगाकाक्षा । आचा० १२७ ।

**आसंकलनम्**-चयनम् । ठाणा० १७९ ।

**आसंतर** - अश्वतरः, वेगसर, अजात्या, घोटकः । दश० १९४ ।

**आसंदओ**-आसन्दकः । आव० ५५८ ।

**आसंदग**-कट्ठमओ । बृ० द्वि० २११अ । कट्ठमओ अज्झूसिरो । नि० चू० प्र० २०८ अ । पल्यङ्क । आव० ३५८ ।

**आसंदयं**-आस्यन्दकम् । आव० ६९३ ।

**आसंदी** - मञ्चिका । पिण्ड० १०९ । उपवेशनयोग्या मञ्चिका । सूत्र० ११८ । दश० २०४ । उपवेशनार्हमासनम् । दश० ११७ । आसनविशेष । सूत्र० १८२ । मञ्चक । सूत्र० २७८ ।

**आसंसइयं**-असशयित, नि सशयं मन सश्रित वा । सूत्र० ३१० ।

**आसंसपओगो**-निदानकरण । नि० चू० प्र० ३५ अ ।

**आसंसा**-आशसा-अप्राप्तप्रापणाभिलाष । आचा० ११५ ।

**आस**-अश्व, वाल्हीकादिदेशोत्पन्न, जात्य । दश० १९४ । क्षेप । आव० ३६४ ।

**आसइ**-आस्ते । आव० ३९६ ।

**आसइत्त**-आसितुम्, उपवेष्टुम् । दश० २०४ ।

**आसए** - आश्रयतीति आश्रय -धूमवलकादि । अनु० २१४ ।

**आसकण्णो**-अश्वकर्ण, सप्तदशान्तरद्वीप । जीवा० १४४ ।

**आसकन्नदीवे**-अन्तरद्वीपनाम । ठाणा० २२६ ।

**आसकन्ना**-अश्वकर्ण, सप्तदशान्तरद्वीप । प्रज्ञा० ५० ।

**आसकरणं**-आससिक्खावर्ण । नि० चू० द्वि० ७१ अ ।

**आसकिसोरो**-अश्वकिशोर । आव० ३७०, २६१ ।

**आसक्खंधसंठिते**–अश्वस्कन्धसंस्थितम्, अश्विनीनक्षत्रसंस्थान। सूर्य० १३०।

**आसखंधसंठिओ**–अश्वस्कन्धसस्थित, उभयोरपि पार्श्वयोः पञ्चनवतियोजनसहस्रपर्यन्तेऽश्वस्कन्धस्येवोन्नततया षोडशयोजनसहस्रप्रमाणोच्चैस्त्वयो शिखायाभावात्। जीवा० ३२५।

**आसगं**–आस्यकम्, मुखम्। जीवा० ११९। आस्यके, पिठरादिमुखे। ठाणा० १४८।

**आसग्गीव**–अश्वग्रीव, त्रिपृष्ठवासुदेवशत्रु। आव० १५९। महामाण्डलिकराजा आव० १७४।

**आसचडगर**–अश्वसमूह। आव० ३७०।

**आसज्ज**–आसाद्य–अगीकृत्य। आचा० १५९।

**आसण**–आसनं, सिंहासनादि। प्रश्न० १६१। आधारलक्षणानि धर्मास्तिकायादीना लोकाकाशादीनि, स्वस्वरूपाणि वा। आव० ५९९। पीठफलकादिकम्। आव० ६५४। स्थानम्। उत्त० १०९। पीठकादि। आव० ७९५। दश० २८१। अपवादगृहीतं पीठकादि। दश० २३१। दश० २२८। वसत्यादि। सूत्र० ६६। कट्ठपीठगादि। दश० चू० १२६। विष्टरम्। प्रश्न० १३८। प्रश्न० ८। सिंहासनादि। जीवा० ४०६। आसन्दकादिविष्टरं, आस्यते–स्थीयतेऽस्मिन्निति वाऽऽसनं–शय्या। आचा० १३४। उपवेशनम्। उत्त० ६०९। अवस्थानम्। उत्त० ६२६। आसनं गोदोहिकोत्कुटुकासनवीरासनादिक। आचा० ३१२। पादपीठपुञ्छनादि। उत्त० ४२३। सिंहासनादि। उत्त० २६२। पीठकादि। सम० ३८। शक्रादीना सिंहासनम्। ठाणा० ११७। आसन्दकादि। दश० २१८। आचा० ६०। भग० २३८। आसग–आसनप्रदान, गुर्वादीना समागताना पीठकाद्युपनयनम्। व्य० प्र० २३५ आ।

**आसणअणुप्पदाणं**–आसनानुप्रदानम्, स्थानात्स्थानं सञ्चारणम्। दश० ३०।

**आसणअभिग्गहो**–आसनाभिग्रह, तिष्ठत एवासनानयनपूर्वकमुपविशतोऽत्रेतिभणनमिति। सम० ९५। ठाणा० ४०८।

**आसणगाणि पंताणि**–पाषाणकरशर्करालोष्टाद्युपचितानि काष्ठानि च दुर्घटितानि। आचा० ३१०।

**आसणत्थ**–आसनस्थ, निषद्यागतम्। आव० ५४१।

**आसणदाणं** – आसनदानम्, पीठकाद्युपनयनम्। दश० २४१। पीठादिदानम्। उत्त० ६०९।

**आसणमणुप्पयाणं**–आसनानुप्रदानम्, आसनस्य स्थानान्तरसञ्चारणम्। ठाणा० ४०८। सम० ९५।

**आसणाणुप्पयाणं** – आसनानुप्रदान, गौरव्यमाश्रित्यासनस्य स्थानान्तरसचारणम्। भग० ६३७।

**आसणाभिग्गह**–आसनाभिग्रह.–तिष्ठत एव गौरव्यस्यासनानयनपूर्वकमुपविशतेतिभणनम्। भग० ६३७। यत्र यत्रोपवेष्टुमिच्छति तत्र तत्रासननयनम्। औप० ४२। तिष्ठत एवादरेणासनानयनपूर्वकमुपविशताऽत्रेतिभणनम्। दश० ३०।

**आसणेय**–आश्वासन। ज० प्र० ५३४।

**आसतरगा**–वेसरा। नि० चू० प्र० १४४ आ।

**आसत्त**–आसक्त, भूमौ लग्नः। जं० प्र० ७६। आ–अवाङ् अधोभूमौ सक्त आसक्त., भूमौ लग्न। प्रज्ञा० ८६। जीवा० १६०। जीवा० २२७। भूमौ सम्बद्ध। औप० ५।

**आसत्तमल्लदामा**–आसक्तमाल्यदामा। आव० १८४।

**आसत्ती**–आसक्ति, धनादावासङ्ग, परिग्रहस्यैकोनत्रिंशत्तम नाम। प्रश्न० ९३।

**आसत्थ**–पीप्पलक। भग० ८०३। असुरकुमारचैत्यवृक्ष। ठाणा० ४८७। मनागाश्वासित। ओघ० ५२। अनंतजिनचैत्यवृक्षविशेषः। सम० १५२। आश्वस्त। आव० ३९०।

**आसन्दकम्**–आसनम्। दश० २१८। आचा० १३४।

**आसन्नं**–समुखीनम्। निर० ८।

**आसपुराओ**–धातकीखडे विदेहविशेषस्य राजधानी। ठाणा० ८०।

**आसम**–आश्रम, तापसादिस्थानम्। भग० ३६। अनु० १४२। सूत्र० ३०९। तीर्थस्थानम्। आचा० ३२९। ठाणा० २९४। ठाणा० ८६। तापसावसथोपलक्षित आश्रय। आचा० २८५। प्रथमतस्तापसादिभिरावासितः पश्चादपरोऽपि लोक तत्र गत्वा वसति। वृ० प्र० १८१ आ। तापसावसथादि, आ–समन्तात् श्राम्यन्ति–तपः कुर्वन्त्यस्मिन्निति। उत्त० ६०५। व्रतग्रहणादिरूप। दश० २७९। आश्रम, तापसादिनिवास। प्रश्न० ५२। तापसावसथोपलक्षित आश्रय। प्रज्ञा० ४८। जीवा० ४०। जीवा० २७९। तापसाद्यावास। औप० ७४।

**आसमडे**–अश्वमृतः, मृताश्वदेह। जीवा० १०६।

**आसमपय**–आश्रमपदम्, पार्श्वनाथदीक्षास्थानम्। आव० १३७। आ–समन्तात् श्राम्यन्ति–तप कुर्वन्त्यस्मिन्निला·

श्रम –तापसावसथादिस्तदुपलक्षितं पदं–स्थानम् ।' उत्त० ६०५ ।

**आसममारो**–मारीविशेषः । भग० १९७ ।

**आसमरूवं**–आश्रमरूपम् । भग० १९३ ।

**आसमित्त** – अश्वमित्रः, कौण्डिन्यशिष्यः । विशे० ९६० । आव० ३१६ । उत्त० १६३ । चतुर्थनिह्नवनाम । ठाणा० ४१० । यस्मात्सामुच्छेदा उत्पन्ना । आव० ३११ ।

**आसमुहदीवे**–अतरद्वीपभेद । ठाणा० २२६ ।

**आसमुहा**–अश्वमुखनामा त्रयोदशान्तरद्वीप । प्रज्ञा० ५० । जीवा० १४४ ।

**आसय**–आशय', निदानम् । आव० ६१० ।

**आसयइ** – आस्वादते–अभिलषति, आश्रयति वा । सम० ५५ ।

**आसरयणे**–अश्वरत्नम् । ठाणा० ३९८ ।

**आसरह**–अश्ववहनीयो रथ । भग० ३२२ । अश्वरथ –नियुक्तोभयपार्श्वतुरङ्गमो रथ इत्यर्थ । जं० प्र० १९८ ।

**आसल** – आसलं, आस्वाद्यम् । जीवा० ३३१ । जीवा० ३७० । आस्वादनीय. । जीवा० ३५१ ।

**आसव**–आसव', मद्यम् । उत्त० ६१९ । पत्रादिवासकद्रव्यभेदादनेकप्रकार. । जीवा० २६५ । पुष्पप्रसवमद्यम् । उत्त० ६५४ । आश्रवाः–उपादानहेतवो हिंसादयः । उत्त० ५९२ । चन्द्रहासादिकम् । जीवा० १९८ । चन्द्रहासादिपरमासवम् । जं० प्र० ४२ । नि० चू० प्र० ३५ अ । आश्रव –सूक्ष्मरन्ध्रम् । भग० ८३ । आश्रवन्ति–प्रविशन्ति कर्म्माण्यात्मनीत्याश्रव.–कर्म्मबन्धहेतुरितिभाव , स चेन्द्रियकषायाव्रतक्रियायोगरूप. । ठाणा० १८ । आश्रवं । प्रज्ञा० ५६ ।

**आसवा** – आसवाः–कर्मबन्धस्थानानि । आचा० १८१ । पापोपादानस्थानानि । आचा० ४१३ । बन्धका । आचा० १८२ । पत्रादिविशेषेण व्यतिरिक्त आसव । प्रज्ञा० ३६४ । आश्रव –आ–समन्तात् शृणोति–गुरुवचनमाकर्णयतीति । उत्त० ४९ । कर्मबन्धहेतुर्मिथ्यात्वादि । आव० ५९८ । आश्रव.–इन्द्रियजयादिरूप' परमार्थपेशलः कायवाङ्मनोव्यापार । दश० २७९ । जलप्रवेशस्थानम् । व्य० प्र० १६७ आ । पापोपादानहेतुरारम्भादि । जीवा० १२८ । शुभाशुभकर्मादानहेतु । ठाणा० ४४६ ।

**आसवओ**–आश्रावक., बन्धक. । विशे० १०९३ ।

**आसवदारं**–आश्रवद्वारम् , कर्मबन्धद्वारम् । आव० ८५१ । आश्रवण–जीवतडागे कर्म्मजलस्य सगलनमाश्रव'–कर्म्मनिबन्धनमित्यर्थ., तस्य द्वाराणीव द्वाराणि–उपाया आश्रवद्वाराणीति । ठाणा० ३१६ ।

**आसवपीतो**–पीतासवः । उत्त० २६३ ।

**आसववुच्छेओ** – आश्रवव्यवच्छेद.– कर्मबन्धद्वारस्थगनेन सवरणेनेत्यर्थ' । आव० ८५१ ।

**आसवार**–अश्ववार., अश्वारूढपुरुषः । भग० ४८१ ।

**आससणाय वसणं**–आशसनाय–विनाशाय व्यसनम्, तृतीयाधर्मद्वारस्य षड्विंशतितमं नाम । प्रश्न० ४३ ।

**आससप्पओगे**–आशंसा–इच्छा तस्याः प्रयोगो–व्यापारण करणं आशंसैव वा प्रयोगो–व्यापारः आशंसाप्रयोग । ठाणा० ५१५ ।

**आससा**–आशंसा । विशे० १००८ । आव० ३२२ । अप्राप्तप्रार्थनम् । ठाणा० १४५ ।

**आससाए**–आशंसया, यद्यत्यन्तप्रवर्षणं भावि तदा स्थलेषु फलावाप्तिरथान्यथा तदा निम्नेष्वित्येवमभिलाषात्मिकया । उत्त० ३६१ ।

**आससेण**–अश्वसेन , पार्श्वजिनपिता । सम० १५२ । पचमचक्रिपिता । सम० १५१ ।

**आसा**–अश्वा । आव० २६१ । आशा–इच्छाविशेष. । प्रश्न० ६४ । औप० ४७ ।

**आसाइज्जा**–आशातयेत्–हीलयेत्, बाधयेत् । आचा० २५७ ।

**आसाएज्जा**–आस्वादयेत्–परिभुञ्जीत । आचा० ३९८ ।

**आसाएमाणे**–आस्वादयन्, ईषत्स्वादयन् । भग० १६३ । आसादयेत्–सस्पृशेत् । आचा० ३८० ।

**आसाढ**–आषाढ , निह्नवनाम । विशे० ९३४ । यस्माद्व्यक्ता उत्पन्ना । आव० ३११ । तृतीयो निह्नव । ठाणा० ४१० ।

**आसाढग**–तृणभेद । भग० ८०२ ।

**आसाढबहुलं**–आषाढबहुल, आषाढकृष्णपक्षम् । आव०

**आसाढभूई** – आषाढभूति –देशभाषानेपथ्यादिविपर्ययकरणे दृष्टांत । सूत्र० ३२९ । दर्शनपरीषहभग्न' । ( मर० ) । व्य० प्र० १९६ अ ।

**आसाढायरिया**-चेल्लयसुरेण थिरीकया आयरिया । व्य० प्र० १९ अ ।

**आसायए**-आशातयति, कदर्थयति । दश० २४४ ।

**आसायण**-आशातकपाराञ्चिकः । ठाणा० १६३ ।

**आसायणसील**-आशातनाशील॰, शातयति-विनाशयतीत्याशातना तस्या शीलं-तत्करणस्वभावात्मकमस्येत्याशातनाशील । उत्त० ५७९ ।

**आसायणा**-आशातना, लघुतापादनरूपा अथवा स्वसम्यग्दर्शनाद्यभावापह्नासरूपा । दश० २४४ । ज्ञानाद्यायस्य शातना । आव० ५४७ । आशातना । प्रश्न० १४६ । आ-सामस्त्येन शात्यन्ते-अपध्वस्यन्ते यकाभिस्ता आशातना-रत्नाधिकविषयाविनयरूपा पुरतोगमनादिका॰ । ठाणा० ५११ । आय -सम्यग्दर्शनाद्यवाप्तिलक्षणस्तस्य शातनाः-खण्डनं निरुक्तादाशातना॰ । सम० ५९ ।

**आसायणिज्जं** - आस्वादनीयम्, सामान्येन स्वादनीयम् । जीवा० २७८ ।

**आसालए**-आशालक॰, अवष्टम्भसमन्वित आसनविशेष । दश० २०४ ।

**आसालओ**-ससावगम (सावष्टंभं) आसण । दश० चू० ९९ ।

**आसालिए**-आसालिक., उर-परिसर्पभेद. । सम० १३५ ।

**आसालिय**-आसालिक॰, उर परिसर्पविशेष । प्रश्न० ८ । जीवा० ३९ । उर परिसर्पभेदविशेष. । प्रज्ञा० ४५ ।

**आसास**-आश्वास॰, आश्वसन्त्यस्मिन्नित्याश्वास । आचा० ५ । आश्वासयति अत्यन्तमाकुलितानपि जनान् स्वस्थीकरोतीति । उत्त० २१२ ।

**आसासग**-अश्वस्यास्यं-मुखं, तत्र गत॰ फेन सोऽश्वास्यगत. । प्रज्ञा० ९५ । आसासक -बीयकाभिधानो वृक्ष । राज० ९ ।

**आसासणय**-आशसनम्, मम पुत्रस्य शिष्यस्य वा इदमिदं च भूयादित्यादिरूपा आशी । भग० ५७३ ।

**आसासदीव** - आश्वासद्वीपः, आकुलितजनस्वस्थकारको द्वीपविशेष । उत्त० २१२ । आश्वासनमाश्वास, आश्वासाय द्वीप आश्वासद्वीप॰ । आचा० २४७ । आश्वास्यतेऽस्मिन्नित्याश्वास, आश्वासश्चासौ द्वीपश्चाश्वासद्वीप॰ । आव० २४७ ।

**आसासय**-आशासक॰, वृक्षविशेष । औप० ११ ।

**आसासा**-आश्वासा -विश्रामा॰ । ठाणा० २३६ ।

**आसासि**-आश्वासय, स्वस्थीकुरु । उत्त० १२७ ।

**आसासिआ**-आश्वासिता । आव० २२२ ।

**आसाहीणएहिं**-दुद्दतेहिं । दश० चू० ११६ ।

**आसिआवणं**-स्तैन्यम् । बृ० तृ० ८६ आ ।

**आसिज्ज**-तिष्ठ । (मर०) ।

**आसित्ता**-आस्वाद्य-भुक्त्वा । आचा० ३३० ।

**आसित्तो**-आसिक्त, सबीज. । बृ० तृ० ९७ आ । जस्स पुण अवच्चं उप्पज्जति सो । नि० चू० द्वि० ३१ अ ।

**आसियं**-आसिक्त, आसेचनं, ईषदुदकच्छटक. । प्रश्न० १२७ । उदकच्छटम् । जीवा० २४६ । निर्द्धाटनं, निष्काशनम् । बृ० द्वि० ६१ आ ।

**आसियावणं**-हरणं । नि० चू० प्र० २६७ अ । अपहरणम् । बृ० प्र० ३०९ आ । हरति । नि० चू० द्वि० १३ आ ।

**आसिले** - आसिल॰, महर्षिविशेष. । सूत्र० ९५ ।

**आसिवावितो**-प्रव्राजित. । नि० चू० प्र० २८६ अ ।

**आसी**-आश्यो-दंष्ट्रा॰ । प्रज्ञा० ४७ । विशे० ३८० । आव० ४८ । आसी -दंष्ट्रा । आव० ५६६ ।

**आसीणे**-आसीन, आश्रित । आचा० २९३ ।

**आसीयावणा**-निष्कषायितुमासादनम् । व्य० द्वि० ३६१ अ ।

**आसीविस**-आशीविष. शङ्खविजये वृक्षस्कार । जं० प्र० ३५७ । नाग । प्रश्न० १०७ । आश्यो-दंष्ट्रास्तासु विषं येषा ते । ठाणा० २६५ । जीवा० ३९ । सीतोदादक्षिणतः वक्षस्कार । ठाणा० ३२६ । उर परिसर्पविशेष॰ । जीवा० ३९ । विशे० ३८० । उत्त० ३१८ । आशीविष -भुजङ्ग. । आव० ५६७ ।

**आसु**-आशु, शीघ्रम् । उत्त० ६३८ । जं० प्र० २०२ ।

**आसुकारिणः**-दुष्टा॰ । नि० चू० प्र० ७५ आ ।

**आसुकोहो**-तक्खणमेव कोहो । दश० चू० १२५ ।

**आसुक्कारो**-आशु-शीघ्र सजीवस्य निर्जीवीकरणम्, अहिविषाद्यशूचिकादि । बृ० तृ० १४७ अ । शीघ्रकार॰, अहिविषविशूचिकादिक. । आव० ६२९ ।

**आसुपन्ने**-आशुप्रज्ञ., शीघ्रमुचितकर्त्तव्येषु यतितव्यमिति प्रज्ञा-बुद्धिरस्येति । उत्त० २१७ । सततोपयुक्त । आचा० २६८ ।

**आसुर** - असुरभावनाजनित आसुर., भवनपतिविशेषस्यायमासुर. । ठाणा० २७४ । कोहो । दश० चू० १२२ ।

